''कर्मणा यमभिप्रैति स सम्प्रदानम्'' इति सूत्रघटकं 'कर्मणा' इति पदं न देयम्, यमभिप्रैति स सम्प्रदानमित्येव सूत्रस्वरूपं स्यात् तत्सत्त्वे 'पत्ये शेते' इत्यत्रापि चतुर्थी भविष्यति। तदर्थं क्रियया यमभिप्रैति इति वार्तिकमपि न कर्तव्यं भविष्यति इति चेदुच्यते तन्न, तत्र श्रीमता नागेशेनोक्तं यत् 'कर्मणा' इति पदाभावे कर्मणोऽपि उद्देश्यत्वात् अन्तरङ्गत्वाच्च तस्यैव सम्प्रदान[8]-संज्ञा स्यात् कर्मसंज्ञया तु पर्यायो भविष्यति''[29]

विषयेऽस्मिन् मौनिकृष्णभट्टेनोक्तम् यत् 'पत्ये शेते' इत्यकर्मकस्थले सम्प्रदानसंज्ञैव भविष्यति। न तु कर्मसंज्ञा, यतोहि कर्मसंज्ञा कर्तृवृत्तिव्यापारजन्यफलाश्रयस्यैव भवति। अत्र तु तथाविधं नास्ति। अतः 'विप्राय गां ददाति' इत्यत्र निरवकाशा कर्मसंज्ञा सम्प्रदानसंज्ञां प्रबाध्य गोरित्यस्य कर्मसंज्ञां विधास्यति। अतः कर्मग्रहणं निरर्थकमेव।[30] तस्मात् आचार्येणोक्तं यत् ''तस्मात् कर्मग्रहणं कर्मणश्चतुर्थीनिमित्तत्वप्रदर्शनेन कर्मश्रुत्यपेक्षया चतुर्थीश्रुतेर्बलवत्वबोधनार्थम्। तेन विक्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति इति दण्डप्रदानं न प्रतिपत्तिः, किन्तु द्वितीयापेक्षया बलीयस्या चतुर्थीश्रुत्या मैत्रावरुणसंस्कारकमिति मीमांसकोद्घोषः संगच्छते।

## 4.2 रुच्यर्थानां प्रीयमाणः[31]

रुच्यर्थकधातुयोगे प्रीयमाणस्य सम्प्रदानसंज्ञा भवति। रुच्-धात्वर्थः कः तद्विषये श्रीमद्भट्टोजिदीक्षितः आह 'अन्यकर्तृकोऽभिलाषः रूचिः'।[32] 'हरिः भक्तिमभिलपति' इत्यत्र अभिलषति-क्रियायाः कर्ता हरिः। तदपेक्षया भिन्नं कर्म भक्तिः तत्कर्म एव कर्ता यस्य अभिलाषस्य स अभिलाष एव रुच्धातोरर्थः। हरिः भक्तिम् अभिलषति इत्यत्र अभिलषतेः यत्कर्म भक्तिः तदेव रुच्धातोः कर्ता।

प्रौढमनोरमायाम् आचार्येणोक्तं यत् इदं सूत्रं प्राप्तकर्मसंज्ञां प्रबाध्य सम्प्रदानसंज्ञा विदधाति।[33] अतः एतेषां मते रुच् धातुः सकर्मकः, तस्यार्थो भवति समवायसम्बन्धावच्छिन्नप्रीत्यनुकूल प्रीतिव्यधिकरणव्यापारः। समवयासम्बन्धेन प्रीत्याश्रयः हरिः तस्य फलाश्रयत्वात् कर्मसंज्ञा प्राप्नोति। श्रीमता नागेशेनापि शेखरे लिखितम् यत् यत्किञ्चिन्निष्ठप्रीत्यनुकूलः प्रीतिव्यधिकरणो व्यापारः रुच्-धात्वर्थः।[34]

विषयेऽस्मिन् आचार्यमौनिकृष्णभट्टो ब्रूते- यत् रुच्धातुरयमकर्मकः। तस्यार्थः क्रियते विषयतारूफलतावच्छेदसम्बन्धेन प्रीतिसमानाधिकरणो व्यापारः रूच्- धात्वर्थः[35]। अर्थात् 'हरये रोचते भक्तिः' इत्यत्र भक्तिः विषयतासम्बन्धेन प्रीतिरूपफलाश्रयो वर्तते। सैव व्यापाराश्रयोऽपि वर्तते। तस्मात् एकत्रैव फलव्यापारयोः सत्त्वात् अकर्मकत्वं सिध्यति। तदा 'हरि' इत्यस्य कर्मसंज्ञायाः अप्राप्तेः प्राप्तषष्ठीं बाधितुं सूत्रमिदं क्रियते। अत एव अनेन विधीयमानचतुर्थ्याः सम्बन्धोऽर्थः। अत एव तेनोक्तम् ''प्रीञ् तर्पणे इति क्रयादेश्चुरादेर्वाभिलपतेश्चयोगे न, तयोः सकर्मकत्वेन रूच्यर्थत्वाभावात्''।

## 4.3 स्पृहेरीप्सितः

हेलाराजमतानुसारेण स्पृह्-धातोरर्थद्वयम्। यदा समवायसम्बन्धावच्छिन्न इच्छानुकूलव्यापारः स्पृहधातोरर्थः तदा अकर्मकोऽयं धातुः। यतोहि समवायेन इच्छा कर्तरि तत्रैव समवायेन तदनुकूल आत्ममनःसंयोगरूपव्यापारोऽपि वर्तते। तत्सत्त्वे पुष्प इत्यत्र ''शेषे षष्ठी'' प्राप्ता यदा विषयतारूपफलतावच्छेदकसम्बन्धेन विषयतावच्छिन्नेच्छानुकूलव्यापाररूपार्थः गृह्यते तदा धातुरयं सकर्मकः। तस्मात् ईप्सिततमत्वात् ''कर्तुरीप्सिततमं कर्म''[36] इति सूत्रेण कर्मसंज्ञा प्राप्ता। अतः स्पृहेरीप्सितः सूत्रमिदं कर्मसंज्ञां शेषषष्ठीं च प्रबाध्य निरवकाशत्वात् सम्प्रदानसंज्ञा विदधाति।[37] अत्रैवमाशङ्का जागर्ति यत् कर्मसंज्ञायाः अभावात् सर्वत्र स्पृहधातुयोगे सम्प्रदानसंज्ञाविधानात् स्पृहणीय इत्यत्र कर्मणि अनीयर् कथं सेत्स्यति इति तत्रोच्यते यत् ''कृत्यलुटो बहुलम्'' इति सूत्रेण बाहुकात् कृत्य-प्रत्ययस्य विधानात् यथा दानीय इत्यत्र सम्प्रदाने अनीयर् भवति तद्वत् स्पृह्-धातोरपि सम्प्रदाने अनीयर् सेत्स्यति। अत एवोक्तम्– स्पृहणीय इत्यत्र बाहुलकात् सम्प्रदाने 'अनीयर्' प्रत्ययः क्रियते। कुमार्य इव कान्तस्य.

.. इत्यत्र षष्ठी कथं तत्र चतुर्थी एव स्यात् तदा तैरुच्यते 'कान्ताय' इत्येव बोधः करणीयः? स्पृह्-धातोरयमपि अर्थः क्रियते "विषयतारूपफलावच्छिन्नेच्छो, तत्र अश्रयता- रूपफलतावच्छेदकसम्बन्धेन विषयतारूपफलाश्रयः 'पुष्पम्' इति वर्तते।[38]

सिद्धान्तमञ्जूषायाम् अपरे तु इत्यनेन अन्योऽपि एकः पक्षः प्रतिपादितो वर्तते। तत्र स्पृह्यर्थफलसम्बन्धित्वेन ईप्सितस्य सम्प्रदानसंज्ञा विधीयते। 'पुष्पाणि स्पृहयति' इत्यत्रापि स्पृह्यर्थफलसम्बन्धि पुष्पम् इति वर्तते। तस्य सम्प्रदानसंज्ञा स्यात् तदा समाधीयते यत् पुष्पाणि इति दर्शनादिक्रियायाः कर्म, न तु स्पृहधातोः कर्म तत्र अर्थः क्रियते पुष्पाणि द्रष्टुं स्पृहयति। अनेन ध्वन्यते यत् स्पृहधातुरकर्मकः। शेषत्वविवक्षायां षष्ठी इत्यपि विधीयते।[39]

अत्र नागेशभट्टः आह- स्पृह्धातुयोगे सम्बन्धित्वेन अविवक्षितस्य विषयत्वेन क्रियाजनकत्वरूपकारकस्य ईप्सितस्य सम्प्रदानसंज्ञा भवति। तदानीं प्राप्तां षष्ठीं प्रबाध्य अनेन सम्प्रदानसंज्ञा विधीयते। अस्मिन् पक्षे स्पृह-धातोः इच्छामात्रमर्थः। यदा प्रकर्षविवक्षा क्रियते तदा धातोरर्थः क्रियते फलावच्छिन्नेच्छा। अर्थात् विषयतासम्बन्धावच्छिन्नेच्छानुकूलव्यापारः स्पृह् धातोरर्थः[40]। अत्र विषयतासम्बन्धेन इच्छारूपफलस्याश्रयः 'पुष्पम्' वर्तते तत्र ईप्सिततमत्वं वर्तते, यत् ईप्सिततमं वर्तते तत् ईप्सितमपि भविष्यत्येव इति धिया ईप्सिततमत्वात् कर्मसंज्ञा ईप्सितत्वात् सम्प्रदानसंज्ञा च प्राप्यते। विषयत्वेन क्रियाजनकत्वरूपकारके सम्प्रदानसंज्ञा सावकाशा, तस्मात् परत्वात् कर्मसंज्ञा भविष्यति। विषयतासम्बन्धावच्छिन्नेच्छानुकूलव्यापारार्थस्वीकारादेव धातुरयं सकर्मको वर्तते। तस्मात् स्पृह-धातोः कर्मणि अण् सेत्स्यति। अत एव 'परस्परं स्पृहणीयशोभाम्' इत्यादि प्रयोगाः जायन्ते। यदा कर्मणः शेषत्वेन विवक्षा क्रियते तदा पुष्पाणां स्पृहयति इत्यपि प्रयोगः जायते।

'कुमार्य इव कान्तस्य त्रस्यन्ति स्पृहयन्ति च' इत्यत्र सम्बन्धमात्रविवक्षया षष्ठी भवति, यदा सम्बन्धविधया विवक्षितस्य क्रियजनकत्वरूपेण विवक्षा क्रियते तदानीं चतुर्थी।

अत्र श्रीमौनिकृष्णभट्टः आह धातोः फलव्यापारौ उभौ अर्थौ इति सिद्धान्तरूपेण व्याकरणदर्शने प्रतिपादितौ। तत्र इच्छामात्रवाची स्पृह्-धातुः इति यत् आचार्यनागेशेनोक्तं सः विचारणीयः पक्षः। अत एव मौनिकृष्णभट्टेन स्पृह-धातोः अन्यः अर्थः कृतः इच्छानुकूलमनःसंयोगरूपव्यापारः।[41] यदा इच्छाविषयस्य कर्मत्वेन अविवक्षा क्रियते तदानीं सम्प्रदानसंज्ञाविधानात् चतुर्थी। अस्मिन् पक्षे कर्मत्वेनाविवक्षायां प्राप्तां षष्ठीं बाधितुं सूत्रमिदं क्रियते। 'एकाश्रिता पुष्पसम्बन्धीच्छानुकूला क्रिया' इति शाब्दबोधः। यदा ईप्सिततमत्वेन विवक्षा तदा 'पुष्पाणि स्पृहयति' इति प्रयोगः। ईप्सितस्य ईप्सिततमस्य वा शेषत्वेन विवक्षायां तु षष्ठी।

श्रीमान् नागेशभट्ट एवं प्रतिपादयति यत् ईप्सितमात्रे सम्प्रदानसंज्ञा, प्रकर्षविवक्षायां कर्मसंज्ञा, शेषत्वेन विवक्षायां षष्ठी। तस्मिन् विषये आचार्यमौनिकृष्णेन एवमुच्यते यत् 'तत्र शेषत्वेन विवक्षितत्वातिरिक्तस्येप्सितत्वमात्रस्य दुर्वचत्वात् प्रकृतधात्वर्थप्रधानीभूतव्यापारजन्यफलाश्रयस्यैवात्रसत्त्वेन वारयति वैलक्षण्यात्, इक्युक्तं तदप्यसमञ्जसम्। तथाहि 'पुष्पेभ्यः स्पृहयति' इत्यादौ पुष्पवृत्तीच्छानुकूलदेवदत्ताश्रयिकात्ममनःसंयोगरूपक्रिया इत्यर्थविवक्षायां सम्प्रदानत्वं यदा तु अन्येच्छानुकूला विवक्षा तदा षष्ठी।[42]

## 5. पञ्चमी

### 5.1 अन्यारादितरर्तेदिक्छब्दाञ्चूत्तरपदाजाहियुक्ते[43] इति सूत्रार्थविचारः

#### नागेशमतम्

"अन्यारादि0" इति सूत्रे अन्यशब्दः स्वरूपपरः, न तु अर्थपरः। अतः अन्यशब्दयोगे तत्प्रतियोगिवाचकात् पञ्चमी विधीयते, तस्मात् इतरशब्दयोगे अप्राप्तपञ्चमीं विधातुं सूत्रे इतरग्रहणमावश्यकम्। अन्यशब्दार्थः

भेदवान् परः। अत्र शङ्क्यते यदि अन्यशब्दात् तदर्थवाचकशब्दस्य ग्रहणाभावे घटाद् भिन्नः, घटादभेदः पटस्य इत्यादि प्रयोगाः कथं संगच्छन्ते इति। तत्र समाधीयते यत् ''अपादाने पञ्चमी'' इति[44] सूत्रेणैव पञ्चमी विधेया, अपायस्य भेदार्थकत्वात्।[45] यदि भेदार्थे ''अपादाने'' पञ्चमी इत्यनेनैव पञ्चमी विधीयते तदा तु अन्यशब्दस्यापि भेदार्थवाचकात् तत्रापि 'अपादाने पञ्चमी' इत्यनेनैव पञ्चमी स्यात्। सूत्रे अन्यशब्दग्रहणं कथं क्रियते इति शङ्का जायते। ''अपादाने पञ्चमी'' इति सूत्रेण पञ्चमी तत्रैव विधीयते यत्र भेदक्रियावाचक-धातोः प्रयोगः स्यात्। साध्यात्वेनाभिधीयमाना क्रिया यत्र प्रतीयते तत्रैव अपादाने पञ्चमी भवति। सा च धातुनैवाभिधीयते। अतः अन्यशब्दस्य भेदार्थवाचकत्वेऽपि साध्यत्वेनाभिधीयमानाभावात् तद्योगे पञ्चमी अप्राप्ता, ततः पञ्चमीं विधातुं सूत्रे अन्यशब्दग्रहणं क्रियते। 'घटो न पटः' इत्यत्र 'न' शब्दस्य भेदार्थकत्वेऽपि भेदार्थवाचकधातोरभावात् ''अन्यरादि0'' इति सूत्रे अन्यार्थवाचकशब्दस्य अग्रहणाच्च तत्र स्वतः पञ्चम्याः अप्राप्तिः। 'घटादेकः' इत्यत्र अन्यशब्दस्य पर्यायवाचक एकशब्दस्य प्रयोगे पञ्चम्याः अप्राप्तेः घटादेकः इति प्रयोगः कथं सम्पत्स्यते। तत्र शेखरकारेणोक्तं यदस्य प्रयोगः असाधुरेव।

**आचार्यमौनिकृष्णमतम्**

''अन्यारादित0'' इति सूत्रे अन्यशब्दात् तदर्थवाचकशब्दस्यापि ग्रहणं क्रियते। अत एव अन्यशब्दः न स्वरूपपरः अपितु अर्थपरः। तस्मात् घटाद् भिन्नः, अन्यः, इतरः इत्यादिप्रयोगाः जायन्ते। अत्र शङ्क्यते यत् अन्यशब्दस्य अन्यार्थबोधकात् इतरशब्दस्यापि तत्र समावेशो भवति तस्मात् अन्यार्थकत्वात् इतरशब्दयोगेऽपि पञ्चमी स्वतः सिद्धा। तदर्थं सूत्रे इतरग्रहणं कथं क्रियते तद् व्यर्थमेवेति शङ्कामुद्भाव्य विषयेऽस्मिन् मौनिश्रीकृष्णभट्टेनोक्तं यत् इतरशब्दः भेदार्थकः अन्यशब्दश्च भेदवान् इत्यर्थबोधकः। अतः भेदवान् इति पदार्थस्य विशेषणीभूतभेदार्थयोगेऽपि पञ्चमी स्यात्। तदर्थं सूत्रे इतरग्रहणं क्रियते।[46] अन्यथा अन्यशब्दस्य 'भेदवान्' इत्यर्थस्य बोधकत्वात् तदर्थवाचकशब्दयोगे एव पञ्चमी सेत्स्यति न तु भेदबोधकशब्दयोगे। इतरार्थवाचकशब्दस्य अग्रहणे 'घटाद् भेदः पटस्य' इत्यादिप्रयोगाः न भविष्यन्ति, प्रयोगश्च जायते तदर्थमितरग्रहणमावश्यकम्। 'घटो न पटः' इत्यत्र 'न' इत्यस्य भेदार्थकत्वेऽपि न हि भेदार्थस्य वाचकः अपितु द्योतकः तस्माद् तत्र पञ्चमी न भवति। अन्यार्थग्रहणे घटादेकः इति प्रयोगोऽपि जायते। षष्ठ्याः अपवादभूतम् सूत्रमिदं। घटस्य भेदः घटीयोभेदः इति प्रयोगः कथं भविष्यति, यतो हि विग्रहे भेदप्रतियोगिवाचकात् अपवादत्वात् 'पञ्चमी' विभक्तेः प्राप्तौ सत्यां षष्ठी कथं विधीयते इति। तत्र समाधीयते यत् 'घटस्य अयम्' इति विग्रहं सम्पाद्य 'अयम' इत्यर्थे घटीयः इति प्रयोगं संसाध्य अयम् पदार्थान्तर्गतभेदेन सह अन्वयः क्रियते।

**5.2 भीत्रार्थानां भयहेतुः**

भयकारणवाचकात् प्रातिपदिकात् 'हेतौ' इति सूत्रेण हेत्वर्थे तृतीया प्राप्ता तां प्रबाध्य अनेन सूत्रेण अपादानसंज्ञा विधीयते तस्मात् पञ्चमी भवति।[47]

यदा तस्यैव क्रियाजनकत्वरूपकारकत्वेनाविवक्षा क्रियते सम्बन्धित्वेन च विवक्षा क्रियते तदा षष्ठ्यपि भवति अभिधाने सति।[48]

श्रीमन्नागेशभट्टः ''भीत्रार्थानां'' इति सूत्रविषये अपादानत्वस्य अविवक्षायां षष्ठीं प्रतिपादयति। मौनिश्रीकृष्णभट्टस्तु नागेशस्य मतमिदं नैव स्वीकरोति। कृष्णभट्टमतानुसारेण सूत्रमिदं हेतोः शेषष्ठ्याश्च अपवादभूतम्। तत्र शब्दकौस्तुभादिग्रन्थाः एव प्रमाणभूताः। कौस्तुभे वर्णितम्[49] यत् 'कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे', इति रामायणश्लोकस्तु कस्य संजुगे इति योजनया व्याख्येयः। प्रौढमनोरमायामपि प्रतिपादितोऽयं विषयः[50]। तत्र बिभ्यति योगे 'कस्य' इत्यत्र पञ्चमी स्यात्, षष्ठी कथं विधीयते इति जिज्ञासायां तदा

भट्टोजिदीक्षितेन समाहितम् यत् 'कस्य' इत्यस्य अन्वयः विभ्यति इत्यनेन सह न क्रियते, अपितु संयुगे इत्यनेन सह अन्वयः क्रियते। संयुगे इत्यस्य 'बिभ्यति' इति क्रियया सह अन्वयः क्रियते। पुनः शङ्का उदेति यत् 'बिभ्यति' इत्यस्य योगे 'संयुगे' इत्यत्र अपादानत्वं स्यात्। तत्रोच्यते यत् संयुगे इत्यत्र अपादानत्वम्, अधिकरणत्वम् इति उभे वर्तेते। तत्र परत्वात्[51] अधिकरणसंज्ञैव भविष्यति तस्मात् सप्तमी जाता। अधिकरणस्याविवक्षायाम् अपादानत्वात् 'पञ्चमी' विभक्तिरपि साध्वी। 'कस्य' अन्वय बिभ्यति क्रियया सह क्रियते चेत् तदा ततोऽपि पञ्चमी विधेया अर्थात् 'कस्मात्' इत्यपि वक्तुं शक्यते।

अत्र श्रीमता कृष्णभट्टेन एवं व्याख्यातं यदि अपादानस्य अविवक्षयैव षष्ठी स्यात् तदा तथैव समाधेयम् आचार्येण कथं ईदृश महान् प्रयासः कृतः तस्मात् ज्ञायते यत् इदं सूत्रं षष्ठ्या अपि अपवादभूतम्। तथैव ''जुगुप्साविरामप्रमादार्थानमुपसंख्यानम्'' इत्यनेन वार्तिकेन जुगुप्सादिविषयस्य अपादानसंज्ञा क्रियते। यदा अपादानत्वेन अविवक्षा सम्बन्धित्वेन च विवक्षा क्रियते तत्र षष्ठ्यपि साध्वी। यथा- पापस्य जुगुप्सते। अत्रापि श्रीमता मौनिकृष्णभट्टेन व्याख्यातं यत् वार्तिकप्रणयनात् वार्तिकमिदं षष्ठीं प्रबाधते।

तथा च तेनोक्तम् 'वार्तिकरीत्या तत्र षष्ठ्यभावे निर्णीते भाष्यमतेऽप्यनभिधानस्यैव शरणीकरणीयत्वात्। फलभेदाभावेन भाष्योपपत्तावन्यथा व्याख्यानस्यानुचितत्वात् सर्वैरपि ग्रन्थकारैस्तथा व्याख्यातत्वाच्च'।[52]

## 6. शेषे षष्ठी

### नागेशमतम्

श्रीमता नागेशेन अस्मिन् सूत्रे प्रतिपादितं यत् 'शेषे षष्ठी'[53] इति सूत्रेण विहितषष्ठ्याः सम्बन्धविशेषरूपेण[54] भानं भवति। अत एव 'चैत्रस्य नेदं वासः' इति प्रयोगः उपपद्यते।[55] अत्र चैत्रस्य वाससा सह सम्बन्धसामान्यसत्त्वेऽपि स्वत्वादिविशेषरूपसम्बन्धाभावात् एष प्रयोगो जायते। चेत् षष्ठ्यर्थस्य सम्बन्धत्वेन सम्बन्धसामान्यरूपेण बोधः स्यात् तदा चैत्रस्य वाससा सह सम्बन्धस्तु अस्त्येव सम्बन्धसामान्याभावात् एष प्रयोगः कथमुपपद्येत। भाष्यवचनादपि ज्ञायते यत् षष्ठ्यर्थः सम्बन्धविशेषः, न तु सम्बन्धत्वेन सम्बन्धसामान्यः, अत एव भाष्यकारेणोक्तं एकशतं षष्ठ्यर्थाः।[56] आदेशप्रत्यययोः इति भाष्यमपि तदैव संगच्छते। तत्र एकापि षष्ठीविषयभेदाद् भिद्यते[57], इति नियमबलेन षष्ठ्यर्थः अवयव-अवयविभावसम्बन्धः अभेदश्च। आदेशस्य अभेदसम्बन्धेन, प्रत्ययस्य अवयव-अवयविभावसम्बन्धेन सकारेऽन्वयः। निर्विशेषं न सामान्यमिति न्यायेनापि विशेषं विना सामान्यस्य बोधो न जायते। भाष्यकारेण प्रतिपादितशेषशब्दार्थनिर्वचनेनापि ज्ञायते यत् सम्बन्धविशेषः षष्ठ्यर्थः। भाष्यकारेण शेषशब्दार्थः एवं निरूपितः 'कर्मादिभ्यो येऽन्येऽर्थाः स शेषः'। तत्र कर्मादिभ्यः अन्ये स्वस्वामिभावादयः। अनेन ज्ञायते यत् सम्बन्धविशेषः एव षष्ठीविभक्त्यर्थः।

काशिकाकारेणापि 'कर्मादिभ्योऽन्यः प्रातिपदिकार्थ व्यतिरिक्तः स्वस्वामिभावादिसम्बन्धः शेषः' इति उक्तम्। अतः ''शेषे षष्ठी'' इति सूत्रेण विधीयमानषष्ठ्याः सम्बन्धविशेषरूपेण भानं जायते। अत एवोक्तम् यत्र क्रियाकारकभावमूलकजन्यजनकभावादिसम्बन्धविशेषस्य[3] विवक्षा क्रियते तत्र ''शेषे षष्ठी'' इत्यनेन षष्ठी विधीयते। यत्र क्रियाकारकभावरूपसम्बन्धस्य विवक्षा क्रियते तत्र द्वितीयादिविभक्तिर्जायते। सिद्धान्तमञ्जूषायां कैश्चित्तु इत्यनेन अन्येऽपि पक्षा उपस्थापिताः, तान् पक्षान् प्रस्तौमि।

कैश्चिदुच्यते 'शेषे षष्ठी' इति सूत्रे शेषपदात् कारकप्रातिपदिकार्थादन्यः यः स एव शेषः। कारकप्रातिपदिकार्थस्य धर्मिपरत्वात् अन्य पदेनापि धर्मी ग्राह्यः। अत एव षष्ठ्यर्थः सम्बन्धी इति स्वीक्रियते।[58] तत्र सम्बन्धित्वेन 'सम्बन्धी' इत्यस्य बोधो जायते। यथा 'राज्ञः पुरुषः' अत्र ङसर्थः 'सम्बन्धी' तत्रसम्बन्धिपदार्थैकदेशे सम्बन्धे प्रकृत्यर्थस्य प्रतियोगितानिरूपकत्वसम्बन्धेनान्वयः, प्रत्ययार्थस्य पुरुषपदार्थे अभेदेनान्वयः राजनिष्ठप्रतियोगितानिरूपकसम्बन्धवान् पुरुषः इति बोधः। अथवा षष्ठ्यर्थः 'सम्बन्धप्रतियोगी' इति। तत्र

सम्बन्धप्रतियोगिनि प्रकृत्यर्थस्य अभेदेनान्वयः क्रियते। एवं प्रत्ययार्थस्य सम्बन्धप्रतियोगिनः स्वावच्छेदकप्रतियोगिता-निरूपितानुयोगितानिरूपकत्वसम्बन्धेन पुरुषपदार्थेऽन्वयः। षष्ठ्याः यदा सम्बन्धप्रतियोगी अर्थः क्रियते तदा प्रत्ययार्थसंख्यायाः प्रत्ययार्थे प्रतियोगिनि एव अन्वयः। यथा कर्म द्वितीयार्थः। तत्र द्वितीयार्थसंख्यायाः द्वितीयार्थकर्मणि एव अन्वयः। तथा विभक्त्यर्थसंख्याप्रकारकशाब्दबोधे विभक्तिजन्योपस्थितिर्हेतुरिति कार्यकारणभावः सर्वत्र संघटते। सम्बन्धः षष्ठ्यर्थश्चेत् तदानीं प्रत्ययार्थसंख्यायाः प्रकृतावन्वयः। तत्र पृथक् कार्यकारणभावः कर्तव्यः। तत्र षष्ठ्यर्थसंख्याप्रकारकशाब्दबोधे प्रकृतिजन्योपस्थितिः र्हेतुरिति कार्यकारणभावः स्वीकर्तव्यः। अन्यथा सम्बन्धे संख्यायाः अन्वयः क्रियते चेद् एकस्य प्रतियोगिनः सत्त्वेऽपि सम्बन्धद्वयसत्त्वात् राज्ञः इति प्रयोक्तव्ये राज्ञोः इति प्रयोगापत्तिः समापतिष्यति।

अत एव सम्बन्धः विभक्त्यर्थः इत्यत्र अर्शाद्यजन्तः सम्बन्धशब्दः। तस्माद् तस्य अर्थः क्रियते सम्बन्धवान् इति। शक्तिः विभक्त्यर्थः इत्यपि पक्षो वर्तते। तदानीं सम्बन्धवान् घटकसम्बन्धः विभक्त्यर्थः। तदा सर्वत्र शक्तिः कारकम्। अर्थात् कर्तृत्वं कर्मत्वमिति द्वितीयाद्यर्थः। तदानीं प्रत्ययार्थसंख्यायाः प्रकृत्यर्थेऽन्वयः क्रियते। तत्र सर्वत्र विभक्त्यर्थसंख्याप्रकारकबोधे प्रकृतिजन्योपस्थितिर्हेतुरिति कार्यकारणभावः स्वीक्रियते। स च सर्वत्र संघटते।

अत्र विचार्यते यत् 'शेषे षष्ठी' इति सूत्रे कारकप्रातिपदिकार्थः व्यतिरिक्तः स्वस्वामिभावादयः शेषशब्दार्थः। तत्र महाभाष्यकारेणोक्तं यत् कारकप्रातिपदिकार्थव्यतिरिक्तः न कश्चन अन्यः विद्यते। तस्मात् 'शेष' इत्यनेन कस्य ग्रहणं स्यात् 'राज्ञः पुरुषः' इत्यत्र पुरुषः राजानं सेवते इति बोधो जायते अथवा राजा पुरुषाय धनं ददाति इत्यस्य बोधो भवति। यदा पुरुषः सेवते तदानीं राजा कर्म वर्तते, पुरुषः कर्ता, यदा पुरुषाय ददाति, तदानीं पुरुषः सम्प्रदानम्, राजा कर्ता वर्तते। सेवनक्रियामादाय परस्परं कर्तृत्वं कर्मत्वमुपजायते, अथवा दानक्रियामादाय परस्परं कर्तृत्वं सम्प्रदानत्वञ्च जायते। सर्वत्र क्रियाकारकम् एव वर्तते, न हि एतदतिरिक्तं किञ्चित् अन्यत् विद्यते। यद् अन्यत् विद्यते तत् क्रियाकारकपूर्वकमेव। दानात् राजनि स्वामित्वं पुरुषे स्वत्वमुद्भूतम्। अतः एते स्वस्वाभिभावादयोऽपि क्रियाकारकपूर्वका एव। एषा क्रिया क्वचित् श्रुता भवति क्वचित् च अश्रुता यथा 'राज्ञः पुरुषः' इत्यत्र दानादिक्रियाः अश्रुताः। क्रियायां अश्रुतायामपि क्रियाकारकमूलकस्वस्वामि- भावसम्बन्धस्य प्रतीतिर्जायते। तस्यां सत्यां षष्ठी। 'मातुः स्मरति' इत्यत्र क्रिया श्रुता वर्तते। श्रवणक्रियायाः 'माता' कर्म वर्तते, तथापि क्रिया कर्मभावसम्बन्धमूलकविषयविषयिभावसम्बन्धस्य विवक्षायां षष्ठी विधीयते। **अत एव भाष्यकारेण उक्तं कः शेषो............**[59] तस्माद्भाष्यवचनात् ज्ञायते यत् स्वस्वामिभावादयः सम्बन्धाः क्रियाकारकपूर्वकाः एव भवन्ति। अत्र वाक्यपदीयकारेणाप्युक्तं यत्

**सम्बन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः।**
**श्रुतायामश्रुतायां वा क्रियायामभिधीयते।।**[65]

यत्र क्रियाकारकभावमूलकस्वस्वामिभावादिसम्बन्धानां विवक्षा क्रियते तत्र षष्ठी विधीयते। यत्र च क्रियाकारकभावरूपसम्बन्धस्य विवक्षा क्रियते तत्र द्वितीयादिविभक्तिर्जायते।

वैयाकरणसिद्धान्तकौमुद्यां शेषे षष्ठी इति सूत्रस्य वृत्तौ लिखितम्– कर्मादीनामपि सम्बन्धमात्रविवक्षायां षष्ठी एव। सतां गतं। सर्पिषो जानीते। मातुः स्मरति। एधोदकस्योपस्कुरुते। भजे शम्भोश्चरणयोः।

**सतां गतम्** इत्यत्र गम्' धातोः भावे क्त प्रत्यये कृते सद्गतक्रियाजनकत्वसमानाधिकरणकर्तृत्वस्य सत्वात् कर्तृकरणयोस्तृतीया इत्यनेन तृतीयैव स्यात्। तत्रोच्यते यत् क्रियाकर्तृभावमूलकजन्यजनकभावरूपसम्बन्धस्य विवक्षायां षष्ठी विधीयते। कियाजनकत्वसमानाधिकरणकर्तृत्वस्य विवक्षायां तु तृतीया विधानात् सद्भिः गतम्' इत्यपि प्रयोगो भवति।

**मातुः स्मरति'** इत्यत्र कर्मत्वस्य यदा विवक्षा क्रियते तदा द्वितीया, तस्याः द्वितीयायाः क्रियाकर्मभावरूपसम्बन्धोऽर्थः यदा क्रियाकर्मभावमूलकविषयविषयिभावरूपसम्बन्धस्य विवक्षा कियते तदा षष्ठी विधेया।

**सर्पिषो जानीते'** इत्यत्र कियाजनकत्वसमानाधिकरणकरणत्वस्य अविवक्षायां क्रियाकरणभाव-मूलकोपकार्योपकारकभावरूपसम्बन्धस्य च विवक्षायां षष्ठी विधीयते। कियाकरणभावरूपसम्बन्धस्य विवक्षायां

च तृतीयाविभक्तौ सत्यां सर्पिषा जानीते' इत्यपि रूपम्।

**ब्राह्मणस्य ददाति, ब्राह्मणाय ददाति'** इत्यत्रापि क्रियाजनकत्वसमानाधिकरणसम्प्रदानत्वस्य विवक्षायां चतुर्थी, क्रियासम्प्रदानभावमूलकोपकार्योपकारकभावरूपसम्बन्धस्य च विवक्षायां षष्ठी विधीयते। शेखरस्य षट्टीकायां शेषे' इति सूत्रे श्रीत्रिपाठिगुरुचरणानुसारेणायं प्रयोग उदाहृतः।

कर्तृकर्मादीनां सम्बन्धत्वेन विवक्षायां यदि सर्वत्र षष्ठी विधीयते तदा घटे भूतलमित्यत्रापि घटगताधिकरणत्वस्य सम्बन्धत्वेन विवक्षायां षष्ठी विधानात् घटस्य भूतलमित्यपि प्रयोगः स्यात्। यद्युच्यते तन्न। संयोगसम्बन्धावच्छिन्नाधारस्यसम्बन्धित्वेन विवक्षाया अदर्शनात्। अत एव नागेशेनोक्तम्–

''संयोगसम्बन्धावच्छिन्नाधारस्य सम्बन्धितया विवक्षा न क्रियते।''[60] अर्थात् घटे यदधिकरणत्वं वर्तते तत्संयोगमूलकम्। तेन ज्ञायते यत् संयोगमूलकं यदधिकरणं स्यात् तद्गताधिकरणत्वस्य सम्बन्धत्वेन विवक्षा न क्रियते। शेषे' इति सूत्रेण तत्रैव षष्ठी विधीयते यत्र क्रियाकारकभावमूलकः कश्चन अन्यः सम्बन्धः भवति अत्र तु घटे यदधिकरणत्वं तत् अन्यसम्बन्धस्य मूलकं नास्ति अपितु अधिकरणत्वमेव संयोगमूलकम्। एवं तर्हि 'पर्वतस्य वृक्षाः' इति प्रयोगः कथं सेत्स्यति, पर्वतवृक्षयोः संयोगसम्बन्धमूलकस्य आधाराधेयभावस्य प्रतीयमानत्वात्। इति जिज्ञासायामुच्यते यत् पर्वतवृक्षयोः अवयवावयविभावस्य कल्पना क्रियते। अतः आधाराधेयमूलकावयव-अवयविभावसम्बन्धस्य विद्यमानात् अत्र षष्ठी विधीयते। यथा ग्रामकूपः, गङ्गातीरम् इत्यादौ समीपे एव अवयवत्वारोपेण षष्ठी क्रियते।[61] तथैवात्रापि लोकव्यवहात् एतादृशी कल्पना क्रियते।

**मौनिकृष्णमतम्**

आचार्येण मौनिकृष्णभट्टेन एवं निरूपितं यत् क्रियाकारकपूर्वकसम्बन्ध एव षष्ठी स्यादिति नास्ति नियमः। तेन विनापि शेषे' इति सूत्रेण सम्बन्धे षष्ठी भवति । अत एव तेनोक्तं षष्ठ्यर्थः सम्बन्धः त्रिविधः। तद्बोधिका षष्ठ्यपि त्रिधा – केवलसम्बन्धबोधिका, कारकाणमविवक्षापूर्वकसम्बन्धबोधिका, कर्तृकर्मादिसम्बन्धबोधिका च। केवलसम्बन्धबोधिकायाः षष्ठ्याः उदाहरणं ''चित्रा गावो यस्य'' इत्यत्र षष्ठी केवलसम्बन्धबोधं कारयति। अयञ्च सम्बन्धः न क्रियाकारकपूर्वकः। तत्र तेन भाष्यप्रमाणमपि प्रस्तुतम् ''गुरोररवत'' इति । अत्र विग्रहः क्रियते– रः अस्ति अस्य इति रवान्, न रवानिति अरवान्, तस्य अरवतः इत्यत्र सामीप्यरूपसम्बन्धस्य षष्ठ्या बोधो जायते। अयं च सम्बन्धः न क्रियाकारकपूर्वकः। तथैव अस्तेर्भूः इत्यत्रापि 'अस्तेः' इत्यत्र षष्ठ्याः सामीप्यम् अर्थः। अत एव अस्य 'अस्तेः' समीपे इत्यर्थः क्रियते। प्रौढमनोरमायाः शब्दरत्ने हरिदीक्षितैः हलन्त्यमिति सूत्रस्य व्याख्यावसर उक्तम् यत् – अस्तेरित्यत्र सामीप्य-बोधाय सामीप्यादिपदानामध्याहारः क्रियते। तैरुक्तम्– ''अस्तेरनन्तरे समीपे वा इत्यादि भाष्यं त्वनन्तरादिपदाध्याहारेण तन्निरूपितसम्बन्धार्थिका वा षष्ठी इत्यभिप्रायकम्।

तत्र श्रीकृष्णभट्टेनोक्तं यत् ''चित्रा गावो यस्येत्यादावपि सामीप्यबोधः सति तात्पर्ये तवापि इष्टः। एतावान् परो भेदः तव गुरुभूताध्याहारेण बोध इति दुराग्रहः, मम तु षष्ठ्यर्थ इति। तत्र षष्ठ्याः सामीप्यार्थकत्वमेव युक्तम्। अन्यथा अस्तेरिति षष्ठीश्रवणानन्तरं सामीप्यार्थशङ्कैव न स्यात्।[63] शब्दरत्नकारेणोक्तम् यत् नहि षष्ठ्यर्थः सामीप्यम् इत्यादावसत्यपि प्रकरणादौ स्वस्वामिभावादिप्रतीतिः तदनन्तरसमीपशब्दप्रयोगमन्तरेण सामीप्याद्यप्रतीतेः।

**कारकाणामविवक्षापूर्वकसम्बन्धबोधिका षष्ठी**

यथा मातुः स्मरति। स्मृ'धात्वर्थक्रियानिरूपितकर्मत्वस्य मातरि सत्वेऽपि तस्य सम्बन्धत्वेन विवक्षया षष्ठी विधीयते। एषा षष्ठी कारकाणामविवक्षापूर्वकसम्बन्धबोधिका।

**कर्तृकर्मादिसम्बन्धबोधिका षष्ठी**

कर्तृकर्मणोः कृति' इति सूत्रेण विधीयमाना षष्ठी कर्तृकर्मादिसम्बन्धबोधिका यथा– ओदनस्य पाचकः, जगतः कर्ता, कृष्णस्य कृति'रित्यादि।

वाक्यपदीयकारेण यद्युक्तं ''सम्बन्धः कारकेभ्यः ........................''।

क्रियाकारकपूर्वकः कारकेभ्यः अन्यः एव सम्बन्धः प्रतीयते। तस्मात् क्रियाकारकपूर्वकत्वं सम्बन्धस्य समागतम् यत् शेखरादिग्रन्थेषु व्याख्यातम्, तस्मिन् विषये आचार्यमौनिकृष्णभट्टस्य अन्यदेव मतं वर्तते।

मौनिश्रीकृष्णभट्टेन अस्याः कारिकायाः अर्थः एवं व्याख्यातः– ''अत एव अन्यपदं सार्थकमन्यथा सम्बन्धः क्रियापूर्वक इत्येव ब्रूयात्। तथा च अन्यपदं सम्बन्धे नान्वेति। एवञ्च कारकेभ्यः कारकद्वारा क्रियान्वितप्रातिपदिकेभ्यः उत्पन्नया षष्ठ्याऽन्यः सम्बन्धः कारकाविवक्षापूर्वकसम्बन्ध उच्यते इत्येवार्थः साधुः''।

श्रीमता नागेशेनोक्तं यत् संयोगसम्बन्धावच्छिन्नाधारस्य सम्बन्धविधया विवक्षा न क्रियते तत्र 'तदस्यास्त्यस्मिन्निति मतुप्' इति सूत्रे 'अस्मिन्' इति पृथक्पदोपदेश एव प्रमाणम्। तत्रोच्यते यदि संयोगसम्बन्ध विशिष्टाधारस्य सम्बन्धत्वेन विवक्षा क्रियेत तदा 'अस्य' इत्युपदेशमात्रेणैव कार्यं सेत्स्यति तदानीं अस्मिन्निति पदं व्यर्थम्। तद्व्यर्थीभूय ज्ञापयति यत् – संयोगसम्बन्धावच्छिन्नाधारस्य सम्बन्धितया विवक्षा न क्रियते। अत एव 'घटाः सन्ति अस्मिन्' इत्यत्र 'अस्मिन्' इति आधारस्य सम्बन्धविधया विवक्षायाः अभावात् 'घटाः सन्ति' अस्य इति विग्रहः न क्रियते। तस्मात् घटवत् इत्यस्य पूर्वोक्तसप्तम्यन्तपदघटित एव विग्रहः करणीयः।

यदि संयोगसम्बन्धविशिष्टस्य आधारस्य सम्बन्धितया विवक्षा न क्रियते तर्हि 'लोहितोष्णीषाः प्रचरन्ति' इति वाक्यं कथं प्रसज्येत यतो हि 'लोहितोष्णीषाः' इत्यस्य विग्रहः क्रियते लोहिता उष्णीषा येषां ते इति लोहितोष्णीषाः। लोहिता उष्णीषा संयोगसम्बन्धेन शिरसि वर्तते। अत्र शिरःसंयोगसम्बन्धविशिष्ट आधारः वर्तते इति शङ्कायामुच्यते यद् अत्रापि लोहिता उष्णीषा यत्र इति सप्तम्यन्ततया विग्रहः[64] क्रियते। तत्र मौनिकृष्णभट्टेन प्रतिपादितं यत् 'वृक्षाः सन्ति अस्मिन्' इत्यर्थकस्य 'वृक्षवान् पर्वतः' इत्यस्य वाक्यस्य पर्वताधिकरणको वृक्षः इति शाब्दबोधाय सप्तमीविभक्तेरुपादानं कर्तव्यमेव। 'गोमान् देवदत्तः' इत्यत्र गोस्वामिकदेवदत्तः इत्यादि बोधनाय षष्ठ्याः उपादानम्। अतः उभयेषाम् पृथक् पृथक् प्रयोजनम् वर्तते।

श्रीमता नागेशभट्टेनोक्तं यत् संयोगसम्बन्धावच्छिन्नाधारस्य सम्बन्धत्वेन विवक्षा न क्रियते। तत्र नागेशेन भाष्यप्रमाणमपि प्रस्तुतं यत् '' तदस्यास्त्यस्मिन्निति सूत्रे अस्मिन्निति पदस्य पृथग्रूपेण प्रयोजनत्वपरं भाष्यकथनम्। तत् मौनिश्रीकृष्णभट्टेन खण्डितम्। तेनोक्तम् यत्, व्रजमवरुणद्धि गाम्'' इत्यत्र गोव्रजयोः संयोगमूलकः एव आधाराधेयभावः वर्तते, एतादृशस्य आधारस्य अविवक्षया प्राप्तां षष्ठीं प्रबाध्य ''अकथितञ्च'' इति सूत्रेण कर्म संज्ञा क्रियते। कथनमिदं तदैव संगच्छते यदा संयोगमूलकस्य आधारस्याविवक्षया षष्ठी प्राप्नुयात्।[66]

संयोगः सम्बन्धः वर्तते न वा इत्यस्मिन् विषये अस्ति मतभेदः।

संयोगसम्बन्ध एव नास्ति तत्र चिदस्थिमालाकारेणास्मिन् विषये उच्यते यत् पर्वतस्य वृक्षा इति न, वृक्षपर्वतयोराधाराधेयभावमूलकसम्बन्धाभावात्। संयोगे हि नाधाराधेयमूलको, विपरीतं तु तस्यैव तन्मूलकत्वात्। किञ्च संयोगो न सम्बधस्तस्य पदार्थयोजनामात्रहेतुत्वात्, संयोगस्य स्वतः पदार्थत्वात् सांसर्गिकविषयतया तस्याभानाच्च। सम्बन्धश्च षष्ठ्यादिभिरेवोच्यते सम्बन्धपदेनापि संसर्गिकविषयतावत्त्वेन नोच्यत इति सम्बन्धः सर्वथा पदागम्यः, संयोगस्तु न कदापि षष्ठ्यादिना न वा विषयतयोच्यते इमौ संयुक्तौ इत्येव तत्र व्यवहारात्।''[62] यद्युच्यते लोकव्यवहारात् एतादृशः प्रयोगः क्रियते तर्हि तत्रधाराधेययस्य मूलः समवायः वर्तते न तु संयोगः। समवायसम्बन्धात् एव परस्परं आधाराधेयभावो जातः। अतः समवायमूलक–आधाराधेयभावमूलक–अवयव–अवयविभावस्य सम्बन्धस्य वाचिका षष्ठी। समवायमूलाकाधाराधेयभावस्य सम्बन्धत्वेन विवक्षा भवति। वस्तुतः पर्वतवृक्षयोः नहि वास्तविकः समवायः, तयोस्तु संयोगः वर्तते, तथापि तत्र अवयव–अवयवि–आरोपात् समवायः परिकल्प्यते।

मौनिश्रीकृष्णभट्टेनोक्तं यत् संयोगः सम्बन्धः वर्तते। यद्युच्यते सम्बन्धस्य षष्ठ्या भानं भवति। संयोगस्य न षष्ठ्या बोधो जायते, संयोगस्तु पदेन बुध्यते, न तु पदाजन्यः इति तन्न[67] 'गङ्गायास्तीरे' अनेन वाक्येन संयुक्तवाचकपदाभावेऽपि गङ्गातीरयोः संयोगः इति बोधो जायते। तस्मात् संयोगः सम्बन्धः। स च षष्ठ्यर्थः इति

परिकल्पयितुं शक्यते। तथैव 'रथस्य अश्वाः' इत्यत्रापि रथाश्वयोः संयोगस्य बोधःषष्ठ्या जायते। अत्र स्वस्वामिभाव-अवयव- अवयविभावादिसम्बन्धस्य कल्पनाऽपि कर्तुं न शक्यते। तथैव कश्चन पुरुषः अन्यस्य पीतवस्त्रं धारयति, तथैव अन्यस्वामिकस्य दण्डं धारयति तदानीं तस्मिन् पुरुषे पीताम्बरोऽयं पुरुषः, दण्डी पुरुषः इति व्यवहारो जायते। तत्र पीतम् अम्बरं यस्य इत्यत्र षष्ठ्या संयोगस्य भानं जायते। दण्डः अस्ति अस्य दण्डी, अत्रापि दण्डसंयुक्ते पुरुषे एतादृशो व्यवहारो भवति। संयोगबोधकं किञ्चित् पदं नास्ति, तथापि तस्य बोधो जायते। अतः षष्ठ्या संयोगस्य भानं भवति। 'पर्वतस्य वृक्षाः' इत्यत्र पर्वते वृक्षाः भवन्ति, तथापि न तस्य ते अवयवाः भवन्ति। अतः एतस्मिन् अर्थे अधिकरणत्वस्य बोधो जायते, न तु अवयव-अवयविभावस्य बोधः सम्भवति इति तात्पर्येण अधिकरणत्वेन बोधविवक्षायां षष्ठी अविधेया इति भाष्यतात्पर्यम्, न तु षष्ठ्यर्थः संयोगः नास्ति, आहोस्वित् सम्बन्धपदेन तस्य बोधो न जायते इत्यत्र नास्ति भाष्यतात्पर्यम्। अनेन परिकल्प्यते यत् संयोगः षष्ठ्यर्थः। तस्य षष्ठ्यर्थत्वेनापि प्रतीतिर्जायते।

नागेशैः स्वस्वस्वामित्वादिसमूहरूपः यः सम्बन्धः स एव षष्ठीविभक्तेरर्थः स च संसर्गतया प्रतीयते इति प्रत्यपादि। तत्रापि गौरवमि'ति कृष्णभट्टेनोक्तम्। अत्र राजपदार्थः स्वास्वामिभावसम्बन्धेन पुरुषपदार्थे अन्वेति। अत्र षष्ठ्यर्थः न प्रकृतौ अन्वेति। अस्ति च नियमः "प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वम्" इति। अतः षष्ठ्यर्थस्य संसर्गतया भानात् तस्यान्वयः प्रकृतौ भवत्येव, नहि, तस्मात् षष्ठ्यर्थस्य संसर्गतया भानं न भवति किञ्च सः प्रकारतया भासते, प्रकृत्यर्थेऽन्वयात्। 'पर्वतस्य वृक्षाः' इत्यत्र षष्ठ्यर्थः सम्बन्धः। पर्वतसम्बन्धिवृक्षाः इत्यर्थे एष प्रयोगः साधुरेव। अयञ्च सम्बन्धः प्रकारत्वेन भासते। अर्थात् तत्र प्रकृत्यर्थस्वान्वयो भवति। यत्र च षष्ठी नास्ति सम्बन्धश्च प्रतीयते तत्र सम्बन्धः संसर्गतया प्रतीयते। यथा 'नीलोत्पलम्' इत्यत्र। उभयोरभेदसम्बन्धः आकाङ्क्षाभास्यः। यत् नागेशेनोक्तं "स्वस्वामिभावरूपसमुदाये संसर्गता वर्तते तदपि कृष्णभट्टेन अस्वीकृतम्। तेनोक्तम्- 'राज्ञः पुरुषः' इत्यत्र स्वत्वं षष्ठ्यर्थः न तु स्वस्वामिभावरूपसमुदायः। तत्र स्वत्वे राजपदार्थस्य निरूपितत्वसम्बन्धेनान्वयः। अत्र राजपदार्थनिरूपिताविशेष्यता षष्ठ्यर्थस्वत्वे वर्तते एवञ्च स्वत्वस्य च आश्रयत्वसम्बन्धेन पुरुषेऽन्वयो भवति। तदानीं पुरुषनिष्ठविशेष्यतानिरूपितविशेषणता 'स्वत्वे' वर्तते। अतः तत्र स्वत्वे विशेष्यता समानाधिकरणविशेषणतायाः सत्त्वात् संसर्गतया तस्य बोधो न स्वीक्रियते। अपितु प्रकारतया तस्य सम्बन्धस्य बोधः स्वीक्रियते। सम्बन्धत्वेन सम्बन्धसामान्यस्य षष्ठ्या बोधो जायते। विशेषरूपेण बोधे नानार्थतापत्तिः समापतति, विशेषबोधस्तु तात्पर्यवशात् कर्तव्यः।

सम्बन्धस्य प्रकारतया बोधो जायते अथवा संसर्गविधया इति विषये उच्यते यदि प्रकारतया बोधः स्वीक्रियते तदा भाष्यविरोधो भवति। भाष्यकारेणोक्तं 'राज्ञः पुरुषः' इत्यत्र राजा विशेषणं पुरुषो विशेष्य इति। षष्ठ्यर्थसम्बन्धस्य प्रकारतया भाने तु सम्बन्धस्यैव प्रकारत्वं विशेष्यत्वम् उच्येत तत्र मौनिश्रीकृष्णभट्टेन भाष्यतात्पर्यमेवं प्रतिपादितम् यत् राजनिष्ठप्रकारतानिरूपितपुरूषनिष्ठविशेष्यता सम्बन्धस्य प्रकारतया मानाभ्युपगमेऽपि सम्बन्धे तयोर्विशेषणविशेष्यभावासंभवात्।

## 7. सप्तमी

### आधारोऽधिकरणम्[68]

कर्तृकर्मद्वारा तन्निष्ठक्रियाया आधारः कारकमधिकरणसंज्ञं स्यादिति सूत्रार्थः।[69] इति सूत्रे आधारः त्रिविधः प्रतिपादितः। आधारत्वेन आधारस्तु एक एव, तथापि आधारतानियामकसम्बन्धस्य भिन्नत्वात् आधारोऽपि भिन्नः। समवायेन, संयोगेन, विशेषणतासम्बन्धेन च अविच्छिन्नो यः आधारः सः औपश्लेषिक आधारः। संयोगस्योदाहरणम्- 'कटे शेते' इति। समवायस्योदाहरणम्- 'पटे शौक्ल्यम्' इति। विशेषणतासम्बन्धावच्छिन्नस्योदाहरणम्[70] 'घटाभावे पटाभावः' इति। वटे गावः शेरते, गुरौ वसति, इत्यत्र गोवटयोः नास्ति संयोगः, गोः संयोगस्तु पृथिव्या सह वर्तते, तथैव गुरौ इत्यत्रापि संयोगो नास्ति, इति शङ्कायामेवं समाधीयते यत् गोसंयुक्तदेशसंयोगस्य संयागरूपतया तदवच्छेदेन संयोगस्य सत्त्वात् अधिकरणत्वमुपपादनीयम्। 'इको यणचि' इत्यत्र इङ्निरूपितकालिकसामीप्यावच्छेदेन संयोगस्यापि

सत्त्वादौपश्लेषाधिकरणत्वं ज्ञेयम्।[71]

**मौनिश्रीकृष्णभट्टेन** निरूपितं यत् औपश्लेषाधिकरणत्वं वास्तविकसंयोग- समवाय-विशेषणता इति सम्बन्धत्रयाभावेऽपि भवति। यथा 'मृगतृष्णाम्भसि स्नातः', इत्यत्र मृगतृष्णाम्भसि तु एषु त्रिषु सम्बन्धेषु न कश्चन वास्तविकः सम्बन्धः भवितुं शक्नोति। अतः अत्र आरोपितौपश्लेषाधिकरणे सप्तमी। अत एव तेनोक्तम्- वस्तुतस्तु 'मृगतृष्णाम्भसि स्नात' इत्यादाविवारोपितौपश्लेषाधिकरणे सप्तमी। ''इको यणचि'' इत्यादावौपश्लेषिकाधिकरणे सप्तमीति ''संहितायाम्'' इतिसूत्रस्थभाष्यमेवं संगच्छते। अन्यथा द्रव्ययोरेव संयोग इति नियमाद् गुणयोर्मुख्योपश्लेषाभावाद् भाष्यमसंगतं स्यात्।[72]

द्वितीयोऽधारः- वैषियिकाधारः यथा- मोक्षे इच्छा, तृतीयः - अभिव्यापकाधारः- यत्र सर्वावयवावच्छेदेन सम्बन्धोऽस्ति सः अभिव्यापकाधारः यथा तिलेषु तैलम्।

उपर्युक्तविवरणेन स्पष्टं वर्तते यद मौनिश्रीकृष्णभट्टो लघुविभक्त्यर्थनिर्णये तत्तत्सूत्रार्थविचारे नैकेषु स्थलेषु पूर्वाचार्येभ्यो भिन्नं मतं प्रतिपादयति। तत्रापि नागेशभट्टेन सहास्य विभतिरधिका दृश्यते। क्वचिद् मौनिश्रीकृष्णभट्टस्य स्वोपज्ञोराद्धान्तोऽपि प्रतिपादितः।

**सन्दर्भटिप्पण्यः**

1. ल.श.शे. पृ. 620
2. प्रौ. मनो. पृ. 612
3. प्रौ. मनो. पृ. 612
4. ल.वि.नि. पृ.
5. ल.वि.नि. पृ.
6. ल.श.शे. पृ. 615
7. ल.श.शे. पृ. 615
8. ल.वि.नि. पृ. 24
9. ल.वि.नि. पृ. 25
10. प्रौ.मनो. 678
11. ल.श.शे. पृ. 604
12. ल.श.शे. पृ. 671
13. ल.वि.नि. पृ.
14. ल.वि.नि. पृ. 36
15. म.भा. पृ. 387 सू.सं. 1-4-51
16. ल.वि.नि. पृ. 33
17. प.सु.सं. 2-3-18
18. वै.भू.सा. 197
19. पा.सू. 1-4-42
20. वा.प.का.सा.समु. 90, 91, पृ. 272
21. पा. सू. 2-3-19
22. वै.सि.कौ. ल.टी. पृ. 809
23. ल.श.शे. पृ. 707
24. पा. सू. 1-4-32
25. ल.श.शे. पृ. 713
26. वै.सि.म. पृ. 172
27. ल.वि.नि. पृ. 48
28. ल.वि.नि. पृ. 49
29. ल.श.शे पृ. 717
30. ल.वि.नि. पृ. 49
31. पा. सू. 1-4-33
32. वै.सि.कौ. पृ. 814
33. प्रौ. मनो. पृ. 729
34. ल. श.शे. पृ. 717
35. लघु वि. नि. पृ. 50
36. पा.सू. 1-4-49
37. प्रौ. मनो. 735
38. ल.श.शे. नि.प.टी. पृ. 491
39. वै.सि.म. पृ. 176
40. ल.श.शे. पृ. 722
41. ल.वि.नि. पृ. 51
42. ल.वि.नि. पृ. 52
43. पा.सू. 273-29
44. ल.श.शे. पृ. 337

45. ल.वि.नि. 37
46. ल.वि.नि. 63
47. ल. श. शे. पृ. 734
48. ल. श. शे. पृ. 734
49. श.कौ.द्वि.भा. पृ. 118
50. प्रौ. मनो. 745
51. प्रौ. मनो. 745
52. ल.वि.नि. पृ. 60
53. पा.सू. 2-3-50
54. ल.श.शे. पृ. 744
55. वै.सि.म. 195
56. वै.सि.म. पृ. 195
57. वै.सि.म. पृ. 196
58. वै.सि.म. पृ. 196
59. म.भा. प.सू. 2-3-50, पृ. 310
60. ल.श.शे. पृ. 747
61. प्रौ.म.पृ. 17
62. ल.श.शे. चि.मा. पृ. 746
63. ल.वि.नि. पृ. 68
64. ल.श.शे. पृ. 747
65. वा.प.तृ.का.का. 156
66. ल.वि.नि. पृ. 69
67. ल.वि.नि. पृ. 70
68. पा.अ. 1-4-45
69. वै.सि.कौ. पृ. 850
70. प्रौ.मनो. पृ. 774
71. वै.सि.कौ.ल.टी. पृ. 851
72. ल.वि.नि. पृ. 76

## सङ्केताः

| | |
|---|---|
| ल.श.शे. | लघुशब्देन्दुशेखर |
| प्रौ. मनो. | प्रौढमनोरमा |
| ल.वि.नि. | लघुविभक्त्यर्थनिर्णयः |
| म.भा. सू.सं. | महाभाष्य सूत्र संख्या |
| पा.अ. | पाणिनीया अष्टाध्यायी |
| वै.भू.सा. | वैयाकरणभूषणसारः |
| वा.प.तृ.का.का. सा.समु. | वाक्यपदीय तृतीय काण्ड कारिका, साधनसमुद्देश्य |
| वै.सि.कौ. ल.टी. | वैयाकरणसिद्धान्तकौमुदी लक्ष्मीटीका |
| ल.श.शे. चि.मा. | लघुशब्देन्दुशेखर चिदस्थीमाला |
| ल.श.शे. नि.प.टी. | लघुशब्देन्दुशेखर नित्यानन्द पर्वतीय टीका |

## संदर्भग्रन्थसूची


1. प्रौढमनोरमा - भट्टमहोपाध्यायश्रीभट्टसोजिदीक्षितविरचितप्रौढमनोरमा। ''महामहोपाध्याय श्री हरिदीक्षितविरचित- लघुशब्दरत्नाख्यव्याख्यया'' महामहोपाध्यायभैरवमिरविरचित ''शब्दरत्न (भैरवी) प्रकाशिकाऽख्यव्याख्यया'' सभापतिशमोपाध्यायनिर्मित 'रत्नप्रभा' नामक टिपण्या च विलसिता, वाण विलास प्रकाशन, चतुर्थ संस्करण, 1997
2. वैयाकरणसिद्धान्तकौमुदी- पण्डितश्रीसभापतिशर्मोपाध्यायविरचितया ''लक्ष्मी' व्याख्योपेता, द्वितीयांशः। प्रकाशक- मोतीलाल बनारसीदास, श्री बालकृष्णशर्मपञ्चोलिना सम्पादिता- प्रथम संस्करण, 1966
3. पातञ्जलमहाभाष्यम्- वाणीविलास प्रकाशन विक्रमाब्द 2044, सम्पादकः डा0 बालशास्त्री

4. वैयाकरणसिद्धान्तमञ्जूषा- सम्पादकः डा. कालिका प्रसाद शुक्लः, प्रकाशन- सम्पूर्णानन्द संस्कृत विश्वविद्यालय, 1977

5. लघुशब्देन्दुशेखरः- टीकाषट्कोपेतः अव्ययीभावसमासान्तः (द्वितीयो भागः) वाणी विलाल प्रकाशन-1992

6. वाक्यपदीयम्- तृतीयं काण्डम् द्वितीयोभागः सम्पादकः पद्मश्रीः पण्डितश्रीरघुनाशशर्मा, सं.सं.वि.वि. वाराणसी, 1997

7. शब्दकौस्तुभ- श्रीमद्भट्टोजिदीक्षितप्रणीतः सम्पदकौ विन्ध्येश्वरीप्रसाद द्विवेदी, गणपतिशास्त्री माकाटे च। चौखबा संस्कृत सिरीज आफिस, वाराणसी, 1991

8. लघुविभक्त्यर्थनिर्णय- मौनिश्रीकृष्णभट्टविरचितः, वादार्थसंग्रहः तृतीयो भागः, सम्पादवाक्रे इत्युपाह्वो गङ्गाधरभट्टसुतमहादेवशर्मा, गुजराती मुद्रणालय, ई. 1915

**डॉ. भारत भूषण त्रिपाठी**
*सह-आचार्य, व्याकरण, रा.सं.सं., लखनऊ परिसर, लखनऊ*



# रसमञ्जरी एवं रसतरङ्गिणी का परवर्ती-साहित्य पर प्रभाव-एक अनुशीलन

अपराजिता मिश्रा

*भानुदत्त के द्वारा चौदहवीं से पन्द्रहवीं शती के मध्य में विरचित काव्यशास्त्रीय ग्रन्थ 'रसमञ्जरी' और 'रसतरङ्गिणी' ग्रन्थों का परवर्ती संस्कृत और हिन्दी काव्यशास्त्र पर तथा कवि शिक्षा प्रणेताओं पर स्पष्ट प्रभाव पड़ा। 'रसमञ्जरी' नायिका - भेद पर आधारित ग्रन्थ है। इस ग्रन्थ ने हिन्दी-साहित्य में रीतिकाल को आधार भूमि प्रदान की। रीतिकाल के प्रायः सभी कवि भानुदत्त के इस ग्रन्थ से न केवल प्रभावित हुए वरन् उन्होंने उनकी विविध परिभाषाओं, वर्गीकरणों और नूतन उद्‌भावनाओं को भी अपनाया। 'रसतरङ्गिणी' में मात्र रसों का व्याख्यान है। जृम्भा नामक सात्त्विक भाव, छल सञ्चारी भाव और माया रस की परिकल्पना भानुदत्त की मौलिक उद्‌भावनाएँ हैं, जिसे परवर्ती संस्कृत और हिन्दी के काव्य एवं काव्यशास्त्र में स्वीकार किया गया है। प्रस्तुत लेख भानुदत्त द्वारा इन दोनों ग्रन्थों में की गई मौलिक स्थापनाओं एवं परवर्ती संस्कृत तथा विशेषतः हिन्दी साहित्य पर पड़ने वाले उसके व्यापक प्रभाव पर एक सर्वेक्षण प्रस्तुत करता है।*

किसी भी कृति का मूल्याङ्कन उसके रचनाकार के काल की सामाजिक, राजनैतिक तथा आर्थिक परिस्थितियों के परिप्रेक्ष्य में ही किया जाता है। साहित्य मानव समाज की गतिशील चेतना की अभिव्यक्ति है, अतः उसके प्रेरक तत्त्व के रूप में मनुष्य के परिवेश का बहुत महत्त्व है। ''साहित्य समाज का दर्पण है।'' इस कथन की सत्यता में तनिक भी सन्देह नहीं, क्योंकि साहित्य समाज से प्रभावित अवश्य ही होता है। युग विशेष की नैतिक, आर्थिक तथा राजनैतिक स्थितियों की अभिव्यक्ति उसके साहित्य में अवश्य ही होती है। उदाहरण स्वरूप हिन्दी-साहित्य के इतिहास का क्रमशःवीरगाथाकाल, भक्तिकाल, रीतिकाल तथा आधुनिककाल में जो विभाजन किया गया इसका मूल आधार यही था कि इन कालों में सामाजिक परिस्थितियाँ भी इनके नामकरण के अनुरूप साहित्य के विकास के अनुकूल थीं। परन्तु ऐसा नहीं है कि इन कालों में अन्य प्रकार की रचनाएँ हुई ही नहीं परन्तु किसी भी काल का नामकरण उस समय में होने वाली अधिकांश रचनाओं के आधार पर ही किया जाता है। इसलिये यद्यपि भक्तिकाल में भी श्रृङ्गारिक रचनाएँ हुईं तथापि प्रधानता भक्तिपरक रचनाओं की ही रही।

यदि हम भानुदत्त के काल की परिस्थितियों पर विचार करें तो हम देखते हैं कि इनके काल की तथा उनके पश्चात् की सामाजिक तथा राजनैतिक परिस्थितियों ने ही इनको संस्कृत एवं हिन्दी दोनों ही साहित्य में महत्त्वपूर्ण स्थान प्रदान कराया। भानुदत्त का काल संस्कृत-साहित्य का सन्ध्याकाल था। संस्कृत के सभी प्रमुख आचार्य जिनमें मुख्य रूप से आनन्दवर्धन, अभिनवगुप्त तथा मम्मट का नामोल्लेख किया जा सकता है, भानुदत्त के पूर्व हो चुके थे तथा इनके पश्चात् संस्कृत में पण्डितराजजगन्नाथ के अतिरिक्त कोई प्रमुख आचार्य नहीं हुये।

हिन्दीसाहित्य में भानुदत्त का काल (चौदहवीं से पंद्रहवीं शती) भक्तिकाल के अन्तर्गत आता है। इसके पश्चात् रीतिकाल का आरम्भ माना जाता है। इस प्रकार भानुदत्त भक्तिकाल के अवसान तथा रीतिकाल के आरम्भ के मध्य में थे। भक्तिकाल को चौदहवीं शती के मध्य से सत्रहवीं शती के अन्त तक माना जाता है। यह काल भारतीय इतिहास की राजनीतिक परिस्थितियों में हिन्दू सत्ता के क्षय होने तथा इस्लाम सत्ता के स्थापित होने की करुण कहानी है। इसने जनसामान्य में उस मनःस्थिति को जन्म दिया जिसमें इस्लाम के प्रभाव से हिन्दू धर्म को बचाने के लिये उसमें आन्दोलनकारी प्रवृत्तियाँ उभरने लगीं। इसी प्रयास में भक्ति आन्दोलन का सूत्रपात हुआ। आचार्य रामचन्द्र शुक्ल ने इस आन्दोलन को तद्युगीन पराजित हिन्दू जाति की निराशा से उद्वेलित तथा इस्लाम की प्रतिक्रिया माना है। इसलिए इस कालावधि में साहित्य की धारा भी भक्ति की ओर मुड़ गयी। परन्तु रीतिकाल के आते-आते मुगल साम्राज्य का पतन आरम्भ होता है। रीतिकाल का आरम्भ सत्रहवीं शती के मध्य से तथा अवसान उन्नीसवीं शती के मध्य तक माना जाता है। भारतीय इतिहास में यह घोर पतन का युग था। मुसलमानों का जीवन तो एहिक शक्ति और सुख के अतिचार के कारण जीर्ण हो गया था, और हिन्दू जीवन भी पराभव से जीर्ण था। विलास का केन्द्र बिन्दु नारी बन गयी थी। इस समय केन्द्रिय शासन पूर्ण रूप से पतन कि ओर जा रहा था। वस्तुतः इन दो शताब्दियों का इतिहास विप्लवों और युद्धों का इतिहास था। धर्म में भी भ्रष्टाचार और पापाचार का प्राधान्य हो गया था। राजनैतिक,सामाजिक एवं धार्मिक पतन के समान ही नैतिक रूप से भी इस काल के मुसलमान एवं हिन्दू पतन की ओर अग्रसर थे। नारी को मात्र उपभोग की वस्तु समझा जाता था। बादशाहों के महल में अनेक वेश्याएं हुआ करती थीं। वे अत्यन्त विलासी हो गए थे। इन सब परिस्थितियों के अतिरिक्त कवि जनसाधारण के कवि न हो कर राजदरबारों में रहने वाले कवि थे। ये राजाओं और बादशाहों के आश्रय में रहते थे तथा अपने आश्रयदाताओं की अभिरुचि तथा काव्यशास्त्रीय नियमों का अनुसरण करते हुए उनकी विलासिता के पोषण के लिए शृङ्गारिक रचनाओं का प्रणयन किया करते थे। लेकिन वह भी संस्कृताचार्यों का अनुकरण मात्र था।

भानुदत्त ने भक्तिकाल के अवसान काल में ही नायक-नायिका भेद पर आधारित अपने ग्रन्थ ''रसमञ्जरी'' की रचना की। अतः इन्होंने ही रीतिकाल के लिए आवश्यक पृष्ठभूमि का सृजन कर दिया। जिसने शीघ्र ही दृष्टि पथ में आने वाले रीतिकाल को आधार भूमि प्रदान की। उत्तरकालीन कवि शिक्षा प्रणेताओं में भानुदत्त सबसे अधिक लोकप्रिय हो गये। रीतिकाल के लगभग दो सौ वर्षों के इतिहास में जितने भी कवि हुए लगभग उन सभी पर भानुदत्त का स्पष्ट प्रभाव परिलक्षित होता है। अतः स्पष्ट है कि भानुदत्त के काल में ही तत्कालीन राजनैतिक, सामाजिक, आर्थिक तथा नैतिक परिस्थितियाँ शृङ्गार रस के विवेचन के अनुकूल साहित्य के निर्माण की पृष्ठभूमि सृजित कर चुकी थीं।

आचार्य भानुदत्त की कृतियों का अध्ययन एवं समीक्षा करने के उपरान्त यह प्रश्न स्वाभाविक एवं अनिवार्य रूप से उठता है, कि भानुदत्त की मौलिकता क्या थी तथा उन्होंने अपने परवर्ती साहित्य को किस प्रकार प्रभावित किया? भानुदत्त के काव्यशास्त्रीय विषय पर लिखे गये दो ही ग्रन्थ हैं- ''रसमञ्जरी'' तथा ''रसतरङ्गिणि''। भानुदत्त के काल की उपरोक्त परिस्थितियों के फलस्वरूप उनके द्वारा प्रतिपादित सिद्धान्तों का पश्चाद्वर्ती संस्कृत आचार्यों पर इतना प्रभाव नहीं पड़ा जितना कि हिन्दी के आचार्यो पर। भानुदत्त के सम्बन्ध में प्रथम उल्लेखनीय तथ्य यह है कि यह ही ऐसे आचार्य हैं जिन्होंने काव्यशास्त्र का लक्षण करते समय मात्र रस की ही व्याख्या की है। इनसे पूर्ववर्ती आचार्यों ने रस को काव्यात्मा मानते हुए भी काव्य के समस्त अङ्गों का विवेचन किया है। यद्यपि प्रत्येक आचार्य की शैली में भिन्नता तथा विवेचन के विस्तार की मात्रा कम या अधिक थी, परन्तु भानुदत्त के पश्चाद्वर्ती कतिपय आचार्यों ने अपने ग्रन्थों में मात्र रसों का अथवा शृङ्गार रस का ही विवेचन किया है।

## ''रसमञ्जरी'' में मौलिक उद्भावनाएँ

नायक-नायिका भेद पर रचित भानुदत्त का यह ग्रन्थ संस्कृत-साहित्य में अत्यन्त महत्त्वपूर्ण स्थान रखता है। इस काव्य-ग्रन्थ का संस्कृत आचार्यों पर तो पर्याप्त प्रभाव पड़ा ही, परन्तु हिन्दी में इस विषय को ले कर एक काल की ही स्थापना हो गयी जिसे ''रीतिकाल'' नाम दिया गया। रीतिकाल के सभी आचार्यों ने नायक-नायिका भेद का ही निरूपण किया है। इसका आधार भी भानुदत्त ही हैं। 'रसमञ्जरी' में वर्णित नायिकादि के लक्षण व उदाहरण आदि को इन आचार्यों ने उसी रूप में ग्रहण कर लिया है, मात्र भाषा का भेद ही दृष्टिगोचर होता है। अतः रीतिकाल का सम्पादनकर्त्ता यदि भानुदत्त को माना जाय तो अनुचित न होगा।

### स्वीया नायिका

आचार्य रुद्रभट्ट ने नायिका भेद[1] को जो रूप दिया, पश्चाद्वर्ती आचार्यों में सभी ने उसको आधार बनाया। आचार्य भानुदत्त ने भी उस परम्परा को नहीं तोड़ा और उसी के आधार पर कुछ दूसरे नवीन भेदों की कल्पना की तथा रुद्रभट्ट द्वारा वर्णित भेदों के लक्षण में परिवर्तन किया। स्वीया का लक्षण[2] इन्होंने स्वामी मात्र में अनुरक्त रहने वाली किया है। विद्याराम ने 'रसदीर्घिका'[3] में इसी को ग्रहण करते हुए बिना किसी परिवर्तन के उद्धृत किया है। इसी प्रकार 'मन्दारमरन्दचम्पू'[4] में श्रीकृष्ण कवि ने स्वामी में ही अनुरक्त रहने वाली आत्मा को स्वीया कहा है। 'रसचन्द्रिका'[5] में विश्वेश्वर ने मात्र भाषा का परिवर्तन करके पति मात्र में ही अनुराग रखने वाली को स्वीया कहा है। इसके अतिरिक्त बड़े अकबर शाह ने भी अपने ग्रन्थ 'शृङ्गारमञ्जरी' में इस लक्षण में किञ्चित् परिवर्तन करके इसको ग्रहण किया है। इनको लक्षण में वर्णित 'एव' उचित प्रतीत नहीं हुआ। अतः उसे ग्रहण न करके परिणेता पति में अनुरक्त रहने वाली को इन्होंने स्वीया बताया। बड़े अकबर शाह भानुदत्त से विशेष रूप से प्रभावित थे। 'शृङ्गारमञ्जरी' का आधार भानुकृत रसमञ्जरी ही है,[6] परन्तु उन्होंने आलोचनात्मक दृष्टि से 'रसमञ्जरी' का अवलोकन करते हुए उनके लक्षणों में यथास्थान परिवर्तन अवश्य कर दिया है।

### मुग्धा नायिका के भेद

स्वीया के तीन भेद मुग्धा, मध्या तथा प्रगल्भा करने के पश्चात् मुग्धा नायिका के जो उपभेद भानुदत्त ने किए वह भी उनकी मौलिक देन है। भानुदत्त ने मुग्धा की परिभाषा देते समय रुद्रभट्ट की परिभाषा[7] को आधार मानकर अपनी परिभाषा दी है, परन्तु इस परिभाषा को व्यवस्थित रूप इन्होंने ही दिया। इन्होंने मुग्धा यौवना के आयु के अनुसार अज्ञात यौवना तथा ज्ञात यौवना नामक दो भेद किए। तत्पश्चात् पुनः नवोढ़ा एवं विश्रब्ध नवोढा[8] रूप दो प्रकार बताए हैं। यह उनकी मौलिक देन है। भानुदत्त के द्वारा मुग्धा का यह वर्गीकरण स्पष्ट और सुव्यवस्थित होने के कारण मौलिक तथा पश्चाद्वर्ती आचार्यों का उपजीव्य सिद्ध हुआ।

इसी को आधार मानकर विद्याराम ने 'रसदीर्घिका' तथा श्रीवेणीदत्त कृत 'रसकौस्तुभ'[9] में नायिका के ज्ञात यौवना तथा अज्ञात यौवना दो भेद किए। इसी प्रकार श्रीकृष्ण कवि ने 'मन्दारमरन्दचम्पू'[10] में भी मुग्धा के पहले अज्ञात एवं ज्ञात यौवना भेद किए हैं। पुनःशुद्ध एवं विश्रब्ध नवोढ़ा रूप से इसे दो प्रकार का बताया है। इनके द्वारा दी गयी मुग्धा की परिभाषा में भी भानुदत्त के लक्षण का प्रभाव स्पष्ट दिखाई देता है। 'रसचन्द्रिका'[11] में आचार्य विश्वेश्वर ने और बड़े अकबर शाह ने भी अपने ग्रन्थ में इन भेदों को स्वीकार कर भानुदत्त के मत को पुष्ट किया है।

### मध्या नायिका

आचार्य भानुदत्त ने मध्या नायिका को एक नवीन नाम 'अतिविश्रब्ध नवोढ़ा'[12] दिया। जिसे आचार्य विश्वेश्वर ने 'रसचन्द्रिका'[13] में स्वीकार किया है।

**प्रगल्भा नायिका**

आचार्य भानुदत्त ने प्रगल्भा की चेष्टाओं[14] के अन्तर्गत रतिप्रीतिमती तथा आनन्दसम्मोहवती रूप से दो चेष्टाओं का वर्णन किया है। इसे भी 'रसदीर्घिका', 'मन्दारमरन्दचम्पू'[15] 'रसचन्द्रिका'[16] तथा रामानन्द ठक्कुर कृत 'रसतरङ्गिणी'[17] में से किन्हीं में प्रगल्भा की दो चेष्टाओं तथा किन्हीं में प्रगल्भा के दो भेदों के रूप में स्वीकार किया गया है।

**परकीया नायिका**

परकीया नायिका के सम्बन्ध में भानुदत्त की मौलिकता उनके द्वारा किए गए परकीया के छः भेद हैं।[18] इन्होंने परकीया नायिका के गुप्ता, विदग्धा, लक्षिता, कुलटा, अनुशयाना और मुदिता भेद किये जो इनके पूर्ववर्ती किसी भी आचार्य ने नहीं किए थे। 'मन्दारमरन्दचम्पू'[19] में श्रीकृष्ण कवि ने इसे इसी रूप में ग्रहण कर लिया है। परकीया का लक्षण भी इन्होंने भानुदत्त के समान ही दिया है। आचार्य विश्वेश्वर[20] एवं रामानन्द ठक्कुर[21] ने भानुदत्त द्वारा वर्णित परकीया के छः प्रकारों को उसी रूप में ग्रहण कर लिया है। रामानन्द ठक्कुर ने भी गुप्ता, विदग्धा, कुलटा तथा अनुशयाना आदि जो भेद किये हैं, उन सबका परकीया में ही अन्तर्भाव किया जाता है, ऐसा कहा है। यहाँ यद्यपि चार प्रकारों का ही उल्लेख किया है, परन्तु इन्होंने यह स्पष्ट कहा है कि आदि पद से लक्षिता और मुदिता का भी अन्तर्भाव हो जाता है। बड़े अकबर शाह ने भी परकीया का भेद करते समय लगभग उन्हीं प्रकारों का उल्लेख किया है जिसका भानुदत्त कर चुके हैं। लेकिन उन्होंने इसके क्रम में परिवर्तन कर दिया है। यद्यपि प्रत्यक्ष रूप से इनमें एवं भानुदत्त में कुछ अन्तर भले ही दृष्टिगोचर हो तथापि मूलतः दोनों में पर्याप्त साम्य है। नायिका की दशाओं के आधार पर अन्य भेदों अन्यसम्भोगदुखिता, वक्रोक्तिगर्विता तथा मानवती[22] में भी भानुदत्त की मौलिक कल्पना दृष्टिगोचर होती है। इनके जो अवान्तर भेद इन्होंने किये हैं, उसी को आधार मानकर आचार्य विश्वेश्वर ने 'रसचन्द्रिका'[23] में तथा रामानन्द ठक्कुर ने 'रसतरङ्गिणी'[24] में इनके भेद किये हैं।

**प्रवत्स्यत्पतिका**

भानुदत्त के द्वारा आठ प्रकार की नायिकाओं का भेद करने के उपरान्त 'प्रवत्स्यत्पतिका'[25] नामक नवें प्रकार की कल्पना भी उनकी मौलिक विचारधारा थी। जिसका पति अभी-अभी या अग्रिम ही क्षण में विदेश जाने वाला हो, वह प्रवत्स्यत्पतिका कहलाती है। भानुदत्त के अनुसार अन्य आठ वासकसज्जादि नायिका भेद में अन्तर्भाव न हो सकने के कारण ही इसे नवाँ भेद माना है। बड़े अकबर शाह ने 'शृङ्गारमञ्जरी' में इस मत को स्वीकार किया है।

**नायिका की सहायिकाओं का निरुपण**

भानुदत्त ने पूर्ववर्ती आचार्यों द्वारा किए गए विस्तृत भेदों को अतिसीमित तथा व्यवस्थित कर मात्र दो सहायकों तक सीमित रखा। सखी और दूती[26] दो भेद नायिका के सहायकों का करते हुए पूर्ववर्ती आचार्यों द्वारा वर्णित सभी कार्यों का विभाजन इन्हीं दोनों के कार्यों में कर दिया है। मण्डन, उपालम्भ, शिक्षा तथा परिहासादि को सखी के कार्य कहा है। बाद के आचार्यों में आचार्य विश्वेश्वर, रामानन्द ठक्कुर[27], बड़े अकबर शाह ने क्रमशः अपने ग्रन्थों 'रसचन्द्रिका', 'रसतरङ्गिणी' तथा 'शृङ्गारमञ्जरी' में सखी और दूती के कार्यों के साथ ही लक्षणों को भी भानुदत्त से ग्रहण कर लिया है।

**नायक / भेद में मौलिकता**

आचार्य भानुदत्त ने नायक के पति, उपपति तथा वैशिक[28] ये तीन भेद किये हैं। इन्होंने इनके जो लक्षण दिये हैं, आचार्य विश्वेश्वर[29] तथा रामानन्द ठक्कुर[30] ने भी इसी को ग्रहण किया है। इसके बाद पति के अनुकूल आदि भेदों को इन आचार्यों ने स्वीकार किया है। भानुदत्त ने यह वर्गीकरण आचार्य शिङ्ग्भूपाल[31] के आधार पर किया था और पश्चाद्वर्ती सभी आचार्यों ने इसे स्वीकार किया। आचार्य भानुदत्त ने इसके अतिरिक्त मानी और चतुर दो अतिरिक्त भेद और किए तथा इन्हें शठ में ही अन्तर्भूत कर लिया। रामानन्द ठक्कुर[32] ने 'रसतरङ्ग्णी' में इसका अनुसरण करते हुए मानी एवं चतुर[33] का शठ में ही अन्तर्भाव किया है। परन्तु 'रसचन्द्रिका'[34] में मानी का मध्यम प्रवृत्ति के नायक में तथा चतुर का अन्तर्भाव उत्तम में कर दिया गया है। बड़े अकबर शाह ने मानी तथा चतुर का शठ में अन्तर्भाव न करके स्वतन्त्र रूप से निरूपण किया है। लेकिन इन दोनों प्रकारों को स्वीकार सभी आचार्यों ने किया है।

भानुदत्त ने सम्भवत: प्रोषितपपिका नामक नायिका भेद[35] से प्रेरित हो कर प्रोषितनायक भेद की नवीन कल्पना भी की। यद्यपि इन्होंने इसका लक्षण नहीं किया है परन्तु जिसकी प्रिया विदेश चली गयी हो ऐसे नायक के अवस्था का चित्रण भानुदत्त ने किया है। इनके अनुसार पति, उपपति तथा वैशिक तीनों ही प्रकार के प्रोषित होते हैं। उनके इस मत को रामानन्द ठक्कुर[36] ने अपने ग्रन्थ में स्वीकार किया है। विश्वेश्वर[37] तथा बड़े अकबर शाह ने भी प्रोषित भेद को स्वीकार किया है।

## रसतरङ्ग्णी में मौलिक उदभावनाएँ

यद्यपि 'रसतरङ्ग्णी' रस-विवेचन का पारम्परिक ग्रन्थ है परन्तु इससे भानुदत्त के मौलिक योगदान को अनदेखा नहीं किया जा सकता। भानुदत्त ने रस-सम्बन्धी अनेक समस्याओं पर नवीन दृष्टि से विचार किया है और अनेक मौलिक उद्भावनाएँ की हैं। इस ग्रन्थ की मौलिक उद्भावनाओं और उनके महत्त्व का यह प्रमाण है, कि अनेक परवर्ती संस्कृत के और हिन्दी के रीतिकालीन आचार्यों ने भानुदत्त की 'रसतरङ्ग्णी' का अनुकरण किया है। नवीन मतों की स्थापना को ही मौलिकता नहीं कहा जा सकता प्रत्युत नवीन आलोक में किसी पूर्वकथित मत का परीक्षण करना भी मौलिकता ही है। भानुदत्त ने दोनों क्षेत्रों में कार्य किया है। भानुदत्त ने रसों के स्वरूप का विवेचन करते समय उसे लौकिक तथा अलौकिक[38] दो प्रकार का माना है। इन्होंने अलौकिक रस के स्वाप्निक, मानोरथिक तथा औपनायिक भेद किये हैं।

भानुदत्त का दूसरा महत्त्वपूर्ण मत यह है कि चित्तवृत्तियाँ[39] दो प्रकार की होती हैं -प्रवृतिमूलक और निवृत्तिमूलक। उनके इस निष्कर्ष में सार प्रतीत होता है। जीवन में विविध-प्रकार के व्यवहार इस मत के प्रमाण हैं। कुछ विषयों कि ओर हम आकर्षित होते हैं और कुछ से दूर हटना चाहते हैं। इन्हीं प्रवृत्तियों का अन्तर्भाव माया-रस में होता है और निवृत्ति का शान्त रस में। माया रस की उद्भावना[40] भानुदत्त की मौलिक उद्भावना है। इन्होंने रसों के भेद-प्रसङ्ग में शान्त रस नामक नवें भेद से प्रभावित होकर माया-रस नामक नवीन रस-भेद की कल्पना की। इसकी पुष्टि में यह तर्क दिया कि प्रवृत्ति और निवृत्ति ये दोनों यदि सार्थक हैं तो माया और शान्त रस भी सार्थक हैं। इसका स्थायी-भाव भानुदत्त ने मिथ्याज्ञान को माना है। भानुदत्त की एक अन्य मौलिक उद्भावना है 'जृम्भा' सात्त्विक भाव।[41] सामान्यत: भानुदत्त को इसका संकेत रुद्रभट्ट कृत 'शृङ्गारतिलक'[42] से प्राप्त हुआ था किन्तु इसकी सैद्धान्तिक स्थापना करने का श्रेय भानुदत्त को ही है। सात्त्विक, स्थायी तथा व्यभिचारी भावों में भानुदत्त ने स्पष्ट पार्थक्य स्वीकार किया है।

इसके अतिरिक्त भरत ने हास्य रस के जो आत्मस्थ और परस्थ दो भेद किये थे उनसे प्रभावित होकर भानुदत्त ने भी हास्य, करुण, भयानक, बीभत्स और अद्भुत रस के स्वनिष्ठ और परनिष्ठ[43] रूप में दो-दो भेद किए हैं। शृङ्गार, वीर और रौद्र के ये भेद नहीं किए हैं। इस ग्रन्थ के अष्टम तरंग में भानुदत्त

11. Ibid, 3.29
12. Ibid, 3.4
13. Ibid, 3.47
14. Ibid. 3.1
15. Ibid, 1.47
16. Ibid, 1.24
17. Ibid; 1.27
18. Ibid, 1.34
19. Ibid; 1. 38
20. Ibid, 6.16
21. Ibid; 4.24
22. Ibid, P. 35
23. Ibid, P. 17
24. Ibid, P. 34
25. Ibid; 3.17
26. Ibid, 1.22
27. Ibid: P- 330
28. Ibid, 6.11
29. Ibid; P. 42
30. Ibid, P. 42
31. Ibid, P 78
32. Ibid, 3.16
33. Ibid, 4.24, 'क्रोधस्य ज्वलितुं झटित्यवसरश्चापेनं शापेन वा' Page 123
34. Ibid; 6.11
35. Ibid; P. 165
36. Ibid; 3.13

## सन्दर्भग्रन्थसूची


1. ध्वन्यालोक – सम्पा. प्रो. शोभित मिश्रा, प्रकाशन चौखम्बा संस्कृत सीरीज ऑफिस, वाराणसी, चतुर्थ संस्करण, वि.स. 2035
2. नाट्यशास्त्र – सम्पा. श्री मधुसूदनशास्त्री, प्रका. बनारस हिन्दू विश्वविद्यालय प्रेस, वाराणसी, वि. सं. 2028
3. उत्तररामचरितम् – डॉ. किशोरनाथ झा, प्रकाशन केन्द्र लखनऊ, प्रथम संस्करण 1974



**Dr. Daya Shankar Tiwari**
***Asstt. Professor, Deptt. of Sanskrit Rajdhani College University of Delhi, Delhi***




# परिमाणमात्रे द्रोणो व्रीहिः

व्रजभूषण ओझा

*प्रथमाविभक्त्यर्थविधायकं प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा इति सूत्रं वर्तते। सूत्रेऽस्मिन् भगवता पाणिनिना परिमाणग्रहणं कृतम्। तच्च परिमाणग्रहणमिष्टशाब्दबोधाय इति ब्रुवन् भट्टोजिदीक्षितः परिमाणग्रहणस्य द्रोणो व्रीहिरित्युदाहरणं प्राददात्। इदञ्चोदाहरणं भाष्यविरुद्धं, युक्तिविरुद्धं, बहुदोषग्रस्तञ्च इत्येत् सर्वं महता प्रयासेन प्रकटयितुं प्रवृत्तोऽयं शोधप्रबन्धः। अस्मिन् शोधप्रबन्धे भाष्यकारादिभिः प्रदत्तानि काशिकाकार-नागोजिभट्टप्रभृतिभिः वैयाकरणैरनुमोदितानि द्रोणः, खारी, आढकमित्यादीन्युदाहरणानि समीचिनानीति प्रतिपादित्। अथ च अस्मिन् शोधप्रबन्धे परिमाणग्रहणाभावे द्रोणशब्दात् प्रथमायाः सिद्धिः द्विविधा प्रतिपादिता। द्रोणशब्दस्य नियतलिङ्गकत्वे प्रातिपदिकार्थमात्रे प्रथमा इत्यंशेन प्रथमायाः सिद्धिः। अस्त्रियाम् आढकद्रोणौ इति कोशवचनेन द्रोणशब्दस्य अनियतलिङ्गकत्वे लिङ्गमात्राद्याधिक्ये प्रथमेत्यंशेन वा प्रथमायाः सिद्धिर्बोध्या। अत्र प्रबन्धे दीक्षितोक्तस्य द्रोणो व्रीहिरित्युदाहरणस्य सूक्ष्मेक्षिकया रहस्योद्घाटनं कृत्वा युक्त्या द्रोणो व्रीहिरित्यस्योदाहरणत्वं न सम्भवतीति प्रतिपादितम्। पुनरत्र प्रबन्धे व्यक्तिविवक्षायां द्रोणो व्रीहय इति वाक्यस्य कथं साधुत्वं इत्यति प्रतिपादितम्। प्रसङ्गेऽस्मिन् सिद्धान्तरत्नाकरग्रन्थस्य खण्डनं क्वचिदंशविशेषे समर्थनञ्च कृतम्। एवमेव मूलार्थविद्योतिनिकारस्याप्यस्मिन् प्रसङ्गे खण्डनमत्र दृश्यते। दीक्षितमतेऽस्मिन् शोधप्रबन्धे तिङ्समानाधिकरणे प्रथमा इति वार्तिकविरोधं प्रदर्श्य दत्त्वा तत् खण्डनं विहितम्। अन्ते भाष्यादिपर्यालोचनेन नागेशमतं युक्तमिति प्रतिपाद्य परिमाणग्रहणस्य चिन्त्यप्रयोजनत्वमिति प्रबन्धकर्तुर्हृदयम्।*

वाक्यमिदं प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमेति सूत्रवृत्तौ परिमाणमात्रे इत्यस्य उदाहरणप्रदर्शनाय दीक्षितेन प्रयुक्तम्। कौमुद्यां दीक्षितेन प्रातिपदिकार्थादीनां कृष्णः, श्रीः, ज्ञानमित्यादीनि पदान्येवोदाहरणत्वेन निर्दिष्टानि किन्तु परिमाणग्रहणस्य द्रोणो व्रीहिरिति वाक्यं दत्तम्। तत्र किमर्थं वाक्यमुदाहरणत्वेन दत्तमिति जिज्ञासाप्रशमनाय **द्रोणरूपं यत्परिमाणं तत्परिच्छिन्नो व्रीहिरित्यर्थः। प्रत्ययार्थे परिमाणे प्रकृत्यर्थोऽभेदेन संसर्गेण विशेषणम्, प्रत्ययार्थस्तु परिच्छेद्यपरिच्छेदकभावेन व्रीहौ विशेषणमिति विवेकः**[1] इत्युक्तम्। इदञ्चोदाहरन्न समीचीनमिति ब्रुवाणः नागोजिभट्टः परिमाणग्रहणस्य द्रोणः, खारी, आढकमित्यादीनि पदानि एव उदाहरणानि स्वीकरोति। काशिकाकारोऽपि परिमाणग्रहणं किम् ? द्रोणः, खारी, आढकम् इत्यत्रपि यथा स्यादित्युव् त्या द्रोणः, खारी, आढकमित्यादीनि पदानि एव उदाहरणत्वेन स्वीकरोति न तु द्रोणो व्रीहिरिति वाक्यम्। भाष्यकारोऽपि **अथ परिमाणग्रहणं किमर्थम्?** द्रोणः, खारी, आढकमित्यत्रपि यथा [2]**स्यादित्युव् त्या** द्रोणः, खारी, आढकमित्यादीनि पदानि एव परिमाणग्रहणस्य उदाहरणत्वेन स्वीकरोति न तु वाक्यम्। अतो विदुषां संशयोऽयं जायते यत्परिमाणग्रहणस्य दीक्षितोक्तं द्रोणो व्रीहिरिति वाक्यरूपमुदाहरणं समीचीनम्। आहोस्वित् नागेशादिसम्मतं द्रोणः, खारी, आढकमिति उदाहरणं समीचीनम्। किं वाऽत्र रहस्यम् ? इति सर्वं सयुक्तिकं विविच्य सिद्धान्तं स्थापयितुं प्रवृत्तोऽयं शोधप्रबन्धः। अत्र सर्वेषां मतानि समीक्ष्य सिद्धान्तः अवबोध्यते।

**दीक्षितसम्मतं परिमाणग्रहणस्य द्रोणो व्रीहिरित्युदाहरणम् –**

**प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमेति**[1] सूत्रे मात्रशब्दस्य प्रत्येकं योगात् प्रातिपदिकार्थमात्रे, लिङ्गमात्रे, परिमाणमात्रे, वचनमात्रे च प्रथमेति सूत्रर्थः फलति। अत्र च सूत्रे लिङ्गग्रहणसामर्थ्यात् प्रातिपदिकार्थपदेन नियतोपस्थितिकार्थो गृह्यते न तु पञ्चकं प्रातिपदिकार्थः। अन्यथा लिङ्गस्यापि प्रातिपदिकार्थत्वेन लिङ्गाधिक्ये प्रातिपदिकार्थमात्रे प्रथमेत्यंशेनैव प्रथमायां सिद्धायां लिङ्गग्रहणं व्यर्थं स्यात्। एवञ्च नियतोपस्थितिकार्थस्यैव अत्र सूत्रे प्रातिपदिकार्थशब्देन ग्रहणात् **प्रातिपदिकार्थमात्रे प्रथमा** इत्यस्य अलिङ्गा उच्चैः, नीचैः इत्यव्ययशब्दाः नियतलिङ्गकाः कृष्णः, श्रीः, ज्ञानमित्यादिशब्दाः उदाहरणानि भवन्ति। तटः, तटी, तटमित्यादौ स्त्रित्वादिलिङ्गस्य अनियतोपस्थितिकत्वेन अप्रातिपदिकार्थत्वात् लिङ्गाधिक्ये प्रथमाविधानाय लिङ्गग्रहणं सार्थकम्। एवञ्च अनियतलिङ्गकाः तटः, तटी, तटमित्यादयः शब्दाः लिङ्गमात्रे प्रथमेत्यंशस्योदाहरणानि। सूत्रे परिमाणग्रहणं न प्रातिपदिकार्थादिवत् प्रथमाविधानाय अपितु इष्टशाब्दबोधायेति बुद्ध्या परिमाणग्रहणस्य द्रोणो व्रीहिरिति वाक्यमुदाहरणं दीक्षितेन प्रदत्तम्। अन्यथा परिमाणग्रहणं व्यर्थमेव स्यात् प्रथमायाः प्रातिपदिकार्थमात्रे प्रथमेत्यंशेन लिङ्गमात्रे प्रथमेत्यंशेन वा सिद्धेः। अयम्भावः– द्रोणशब्दविषयेऽस्ति मतद्वयम्। केचन् द्रोणशब्दस्य नियतलिङ्गकत्वमामनन्ति अपरे चानियतलिङ्गकत्वम्। यद्ययं द्रोणशब्दः कृष्णादिवत् नियतलिङ्गकः तदा प्रातिपदिकार्थमात्रे प्रथमेत्यंशेनैव प्रथमा सिद्ध्यति। यदि चायं द्रोणशब्दः **अस्त्रियामाढकद्रोणौ**[5] इति कोषप्रामाण्यात् तटादिवत् अनियतलिङ्गकस्तर्हि लिङ्गमात्रे प्रथमा इत्यंशेन प्रथमा सिद्ध्यति। एवञ्च द्रोणशब्दात् प्रथमायां सिद्धायां परिमाणग्रहणन्न प्रथमाविधानाय अपितु द्रोणो व्रीहिरिति वाक्यात् द्रोणाभिन्नं यत्परिमाणं तत्परिच्छिन्नो व्रीहिरिति इष्टशाब्दबोधाय इत्यभिप्रायेण कौमुदीकारः भट्टोजिदीक्षितः द्रोणो व्रीहिरिति वाक्यमेव उदाहरणत्वेन प्रदर्शयति। **तथा हि** – द्रोणो व्रीहिरिति वाक्ये द्रोणशब्दः परिमाणविशेषस्य वाचकः। तस्मात् परिमाणविशेभावाचकात् परिमाणसामान्येऽर्थे परिमाणमात्रे प्रथमा इत्यंशेन प्रथमाविभक्तिर्जायते। एवञ्च द्रोणः इत्यत्र प्रकृत्यर्थः परिमाणविशेषः द्रोणपदार्थः सुप्रत्ययार्थः परिमाणसामान्यम्। **सामान्यविशेषयोरभेदान्वयः** इति नियमात् प्रकृत्यर्थस्य परिमाणविशेषद्रोणस्य प्रत्ययार्थे परिमाणसामान्ये अभेदसम्बन्धेनान्वये द्रोणः इति पदस्य द्रोणाभिन्नं परिमाणमित्यर्थो जायते। पुनः सुप्रत्ययार्थस्य परिमाणसामान्यस्य व्रीहिरूपप्रातिपदिकार्थे योग्यतावशात् परिच्छेद्यपरिच्छेदकभाव–सम्बन्धेनान्वये द्रोणो व्रीहिरिति वाक्यात् द्रोणाभिन्नं यत्परिमाणं तत्परिच्छिन्नो व्रीहिरिति इष्टशाब्दबोधः जायते।

द्रोणशब्दात् प्रातिपदिकार्थमात्रे प्रथमा इत्यंशेन लिङ्गमात्रे प्रथमा इत्यंशेन वा प्रातिपदिकार्थे प्रथमायां द्रोणो व्रीहिरिति वाक्यात् उपर्युक्तः इष्टशाब्दबोधः न स्यात्। अपितु द्रोणाभिन्नो व्रीहिरित्यनिष्टः शाब्दबोधः आपद्येत्। यतः द्रोणशब्दात् प्रातिपदिकार्थमात्रे प्रथमायां प्रातिपदिकार्थस्य द्रोणप्रातिपदिकेन उक्तत्वात् सुप्रत्ययस्य प्रातिपदिकार्थद्योतकत्वमेव अङ्गीकार्यम्। तथा सति द्रोणो व्रीहिरिति वाक्ये सुप्रत्ययस्यातिरिक्तार्थाभावेन द्रोणप्रातिपदिकार्थस्य परिमाणविशेषस्य द्रोणस्य व्रीहिरूपप्रातिपदिकार्थेऽन्वयो वाच्यः। स चान्वयः **निपातातिरिक्तनामार्थयोरभेद एव संसर्गः**[6] इति व्युत्पत्त्या अभेद एव न तु परिच्छेद्यपरिच्छेदकभावरूपः। द्रोणो व्रीह्योः मेयमापकयोः भेदस्य सर्वानुभावसिद्धत्वेन द्रोणाभिन्नो व्रीहिरिति शाब्दबोधो नेष्टः। अतः द्रोणो व्रीहिरिति वाक्यजन्यशाब्दबोधे परिच्छेद्यपरिच्छेदकभावस्य संसर्गविधया भानाय परिमाणसामान्ये प्रथमाविधानमावश्यकम्। यदा तु द्रोणशब्दात् परिमाणसामान्ये प्रथमाविधीयते तदा द्रोणरूपनामार्थः सुप्रत्ययार्थे परिमाणसामान्येऽभेदेनान्वयेति। सुप्रत्ययार्थश्च परिमाणसामान्यं परिच्छेद्यपरिच्छेदकभावसम्बन्धेन व्रीहौ अन्वेति। तथा सति द्वयोः नामार्थयोरत्र अन्वयाभावेन **निपातातिरिक्तनामार्थयोरभेद एव संसर्गः** इति व्युत्पत्तिविषयत्वाभावेन परिच्छेद्यपरिच्छेदकभावसम्बन्धेनान्वये इष्टः शाब्दबोधः जायते।

द्रोणो व्रीहिरिति वाक्ये व्रीहिरित्यत्र जातावेकवचनमन्यथा एकत्वविशिष्टस्य व्रीहेः द्रोणपरिमितत्त्वाभावेन

शाब्दबोधानापत्तिः। व्यक्तिपक्षे द्रोणपरिमितानां व्रीहिनामनेकत्वात् द्रोणो व्रीहयः इत्येव साधु। तथा चोक्तं सिद्धान्तरत्नाकरे - **व्यक्तिविवक्षायान्तु बहुवचनं भवत्येव तेन द्रोणो व्रीहय इत्यपि भवतीति**[7]। लक्ष्मीटीकाकारोऽप्याह व्यक्तिविवक्षायान्तु द्रोणो व्रीहयः इति भवत्येवेति[8] यत्तु सिद्धान्तरत्नाकरकृता द्रोणो व्रीहिरित्यत्र सुब्विभक्तेः बहुत्वे लक्षणायां जातिपक्षे व्यक्तिपक्षे वा एकवचनमेव भवतीत्युक्तं तच्चिन्त्यं विभक्तौ लक्षणायाः अनङ्गीकारात्।

अत्र कौमुदीमूलार्थविद्योतिनीकारः महामहोपाध्यायः दीनबन्धुझामहाभागः द्रोणो व्रीहयः[9] इति वाक्यं न भवतीति प्रतिपादितवान्। तत्र द्रोणो व्रीहयः इत्यापत्तिं वारयितुं तत्प्रत्ययार्थपरिमाणप्रकारकबोधे तत्सजातीयप्रत्ययान्तपदजन्योपस्थितेः कारणत्वं प्रथमाविभाजकधर्मेण सादृश्यञ्चाङ्गीकृतम्। एवञ्च प्रथमायाः विभाजको धर्म सुत्वम् औत्वं जस्त्वञ्च। द्रोणो व्रीहिरित्यत्र द्रोणपदोत्तरसुविभक्तेः व्रीहिपदोत्तरजस्विभक्तौ प्रथमाविभाजकसुत्वधर्मेण साजात्याभावात् स्वर्थपरिमाणप्रकारकशाब्दबोधे न द्रोणो व्रीहयः इति वाक्यस्य साधुत्वमपितु द्रोणो व्रीहिरिति वाक्यस्यैव साधुत्वम्। द्रोणो व्रीहिरिति वाक्ये परिमाणार्थवाचकस्य सुप्रत्ययस्य व्रीहिपदोत्तरसुप्रत्यये प्रथमाविभाजकसुत्वधर्मेण साजात्यस्य सत्वेन सुप्रत्ययार्थपरिमाणप्रकारकशाब्दबोधे भवति द्रोणो व्रीहिरिति वाक्यस्य साधुत्वम्।

इदमपि न युक्तं प्रतिभाति। द्रोणो व्रीहिरिति वाक्यस्य साधुत्वे द्रोणो व्रीहयः इति वाक्यस्य असाधुत्वे च विनिगमकाभावेन द्रोणो व्रीहिरितिवत् व्यक्तिपक्षे द्रोणो व्रीहयरिति वाक्यस्येष्टत्वेन तत्प्रत्ययार्थपरिमाण-प्रकारकशाब्दबोधे तत्सजातीयप्रत्ययान्तपदजन्योपस्थितिः कारणमिति कल्पिते कार्यकारणभावे प्रथमाविभाजक-सुत्वादिधर्मेण साजात्यकथनमप्रमाणिकम्। अतः द्रोणो व्रीहयः इति वाक्यस्य साधुत्वबोधनाय अस्मिन् कार्यकारणभावे विभक्तिविभाजक-प्रथमात्वादिधर्मेण साजात्यं ग्राह्यम्। एवञ्च प्रकृते द्रोणपदोत्तरसुविभक्तेः व्रीहिपदोत्तरजस्विभक्तौ विभक्तिविभाजकप्रथमात्वेन साजात्यमस्तीति कृत्वा सुप्रत्ययार्थपरिमाणप्रकारकशाब्दबोधे द्रोणो व्रीहयः इति वाक्यस्याऽपि साधुत्वम्।

यदि चोच्यते प्रमाणिकग्रन्थेषु द्रोणो व्रीहयः इति वाक्यस्य प्रयोगाभावादेव असाधुत्वं तदा तादृशबोधाय प्रमाणिकग्रन्थेषु द्रोणो व्रीहिरिति वाक्यस्याऽपि प्रयोगाभावादस्याऽपि असाधुत्वं स्यात्। यदि च सूत्रे परिमाणग्रहणसामर्थ्यादेव तादृशबोधाय द्रोणो व्रीहिरिति वाक्यस्य साधुत्वमुच्यते, तदा व्यक्तिपक्षे द्रोणो व्रीहयः इति वाक्यस्याऽपि साधुत्वाङ्गीकारे न किञ्चिद् बाधकं भेदान्वयबोधमप्रति समानवचनकत्वस्य अकारणत्वात्। अत एव राज्ञः पुरूषौ, राज्ञः पुरूषाः इत्यादिवाक्यानां साधुत्वम्। यदि चोच्यतेऽत्र प्रत्ययार्थप्रकारकबोधो नास्तीति कृत्वा राज्ञः पुरूषौ इत्यादिवाक्यानां साधुत्वम्। द्रोणो व्रीहयः इत्यत्र सुप्रत्ययार्थप्रकारकबोधः, अतो नास्य वाक्यस्य साधुत्वम्, तदपि अविचारितरमणीयं प्रकारतावादिनये षष्ठ्यर्थस्वत्वप्रकारक-बोधस्याङ्गीकारात्। द्रोणो व्रीहिरिति वाक्यस्य साधुत्वे लोकव्यवहार एव मानमित्यपि न। इदानीं तादृशबोधाय द्रोणो व्रीहिरिति वाक्यमेव प्रयुज्यते न द्रोणो व्रीहयः इति वाक्यमित्यस्य वक्तुमशक्यत्वात्, अतः विनिगमकाभावेन द्रोणो व्रीहिरिति वाक्यस्य इव द्रोणो व्रीहयः इति वाक्यस्याऽपि साधुत्वमङ्गीकार्यम्।

यत्तु लक्ष्मीटीकाकृखिः परिमाणग्रहणस्य दीक्षितसम्मतप्रयोजनकथनावसरे लिङ्गविशिष्टे प्रातिपदिकार्थे प्रथमायाः स्वीकारे द्रोणाभिन्नो यो नामार्थः तस्य व्रीहौ परिच्छेद्यपरिच्छेदक- भावसम्बन्धेनान्वयासम्भवः[10] इत्युक्तम्, तच्चिन्त्यम्। प्रातिपदिकार्थे प्रथमायां कृतायां प्रथमायाः प्रातिपदिकार्थद्योतकत्वेनानुवादकत्वेन वा अतिरिक्तार्थाभावेन साक्षात् द्रोणपदोपस्थापितस्य द्रोणपदार्थस्य व्रीहिपदार्थे परिच्छेद्यपरिच्छेदकभावेन व्रीहौ अन्वयाङ्गीकारे द्रोणपरिच्छिन्नो व्रीहिः इत्यपादनमेव युक्तम्, न तु द्रोणाभिन्नो यो नामार्थः तत्परिच्छिन्नो व्रीहिरिति। अत्रेदमवधेयम्, प्रातिपदिकार्थमात्रे जातायाः प्रथमायाः न प्रातिपदिकार्थत्वसामान्यधर्मेण वाचकता

न वा घटत्वादिविशेषधर्मेण वाचकता। अन्यथा घटः इत्यत्र प्रातिपदिकार्थत्वेन वाचकताङ्गीकारेण घटाभिन्नो नामार्थ इति बोधः स्यात्। स च बोधः अनुभवविरुद्धः घटः इत्युच्यमाने घटत्वविशिष्टः इत्येव बोधानुभ्वात्। यदि च घटत्वादिविशेषधर्मेण प्रथमायाः वाच्यत्वस्वीकारे घटाभिन्नो घटः इति बोधावृत्तिः स्यात्। तथा सति घटो घटः इतिवत् शाब्दबोधानापत्तिः। अतः प्रातिपदिकार्थमात्रे कृतायाः प्रथमायाः प्रातिपदिकार्थद्योतकत्वमेव युक्तम्। अनुवादकत्वेन वा वाचकत्वमङ्गीकार्यम्। तथा चोक्तं कौमुदीमूलार्थविद्योतिन्याम् - **घट इत्यादौ घटाभिन्नो घटः इति वा घटाभिन्नो अर्थ इति वा न बोधः**[11] इति। एवञ्च प्रातिपदिकार्थमात्रे प्रथमायां द्रोणाभिन्नो नामार्थः इति कथनं न युक्तं प्रतिभाति इति सुधिभिः विभावनीयम्।

न च भेदान्वयबोधम्प्रति समानविभक्त्यन्तपदजन्योपस्थितेरकारणत्वात् परिच्छेद्यपरिच्छेदक- भावसंसर्गबोधाय **द्रोणो व्रीहिमानय** इति वाक्यस्याऽपि साधुत्वं स्यादिति वाच्यम्, प्रत्ययार्थपरिमाणस्य प्रथमान्तार्थे एवान्वयात् प्रत्ययार्थपरिमाणनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधे प्रथमान्त- पदजन्योपस्थितिः विशेष्यतासम्बन्धेन कारणमिति कार्यकारणभावाङ्गीकारात्। द्रोणो व्रीहिमानय इत्यत्र तु व्रीहिपदार्थस्य द्वितीयान्तपदजन्योपस्थितिः न तु प्रथमान्तपदजन्योपस्थितिः। यत्र च द्रोणो व्रीहिरित्यत्र प्रथमान्तपदजन्योपस्थितिः कारणं तत्र भवत्येव तादृशः बोधः।

न च परिमाणार्थे प्रथमां विधाय परिमाणार्थस्य च परिच्छेद्यपरिच्छेदकभावसम्बन्धेन व्रीहौ अन्वयाङ्गीकारे सर्पिः कुडवमित्यत्रपि तादृशान्वयबोधाङ्गीकारे परस्परान्वयित्वेन व्यपेक्षारूपसामर्थ्यस्य सत्वात् **इसुसोः सामर्थ्ये**[12] इत्यनेन षत्वापत्तिरिति वाच्यम्। **तिरसोऽन्यतरस्यामिति**[13] सूत्रदन्यतरस्यामित्यनुवर्त्य **इसुसोः सामर्थ्ये** इति सूत्रेण व्यवस्थितविभाषया षत्वविधानात्। एवञ्च दीक्षितमते इष्टशाब्दबोधाय परिमाणग्रहणमिति स्थितम्।

ननु द्रोणो व्रीहिरित्यत्र परिमाणार्थे प्रथमां विधाय प्रथमार्थे परिमाणसामान्ये प्रकृत्यर्थस्य परिमाणविशेषस्य द्रोणस्याभेदान्वयो न युक्तः प्रकृत्यर्थप्रत्ययार्थयोः क्वाप्यभेदान्वयस्यादृष्टत्वादिति चेन्न। देवतार्थकतद्धितादौ ऐन्द्रं हविः इत्यत्र देवतार्थकतद्धितादौ प्रकृतिप्रत्ययार्थयोरभेदान्वयस्य दृष्टत्वात्। तथा हि इन्द्रो देवता अस्य इन्द्रशब्दात् जातः अण्प्रत्ययः देवतां द्रव्यञ्च ब्रूते तत्र प्रकृत्यर्थस्य इन्द्रपदार्थस्याण्प्रत्ययार्थे देवतारूपेऽर्थेऽभेदेनान्वयो भवति। देवतापदार्थस्य च द्रव्येऽन्वये इन्द्रादिभिन्नदेवतासम्बन्धिद्रव्यम् इत्यर्थबोधो जायते। एवञ्च प्रकृतेऽपि प्रकृतिप्रत्ययार्थयोरभेदान्वये न किञ्चिद् बाधकम्।

अत्र परिमाणपदं परिच्छेदकसामान्यपरम्, न तु परिमाणन्तु सर्वतः इति लक्षणलक्षितपरिमाणविशेषपरम्। अत एव उन्मादिवाचकशब्देभ्योऽपि परिमाणसामान्यार्थे प्रथमा सिद्ध्यति। तथा च घृतं पलमित्यादावपि परिच्छेद्यपरिच्छेदकभावस्य संसर्गविधया भानं भवति। तथा चोक्तम् - परिमाणग्रहणं परिच्छेदकमात्रेपलक्षणम्[14]।

**काशिकाकारसम्मतं परिमाणग्रहणप्रयोजनम् -**

काशिकाकृता **प्रातिपदिकार्थः सत्ता**[15] इत्युव् त्वा प्रातिपदिकार्थमात्रे इत्यस्य उच्चैः, नीचैः इत्युदाहरणं दत्तम्। पुनः लिङ्गग्रहणं किमित्युव् त्वा लिङ्गमात्रे इत्यस्य कुमारी, वृक्षः, कुण्डमित्युदाहरणानि दत्तानि। पुनः परिमाणग्रहणं किमित्युव् त्वा द्रोणः, खारी, आढकमित्यत्रपि यथा स्यादित्युक्तम्। काशिकाग्रन्थस्योदाहरणानि दृष्ट्वा ज्ञायते यत् परिमाणग्रहणं नेष्टशाब्दबोधाय अपितु प्रथमाविधानाय एव। अत एव कौमुदीग्रन्थवत् द्रोणो व्रीहिरिति वाक्यमुदाहरणत्वेन काशिकाकृता नोक्तम्। इयं काशिकाग्रन्थं व्याचक्षाणः पदमञ्जरीकारः परिमाणग्रहणं किमिति प्रतीकमादाय अर्थ इति वा लिङ्ग इति वा सिद्धि[16] मन्यते इति प्राह। तस्यायं भावः प्रातिपदिकार्थेति सूत्रे प्रातिपदिकञ्च अर्थञ्च लिङ्गञ्च परिमाणञ्च वचनञ्चेति प्रातिपदिकार्थलिङ्गपरिमाणवचनानि इति इतरेतरयोगद्वन्द्वं समधिकृत्य मात्रशब्दस्य प्रत्येकं योगात् प्रातिपदिकमात्रे अर्थमात्रे लिङ्गमात्रे परिमाणमात्रे वचनमात्रे च प्रथमा स्यादिति सूत्रर्थो भवति।

प्रातिपदिकमात्रे प्रथमा इत्यंशस्तु निपातस्यानर्थकस्य प्रातिपदिकसंज्ञा वक्तव्या[17] इत्युक्त्या कृत्तद्धितसमासश्चेति सूत्रे चकारग्रहणेन वा यत्रनर्थकस्य निपातस्य प्रातिपदिकसंज्ञा तत्र प्रथमाविधानाय तद्यथा - अवद्यतीत्यादौ। अर्थे प्रथमेत्यंशस्तु काशिकाकारमते अलिङ्गेषु उच्चैः नीचैः इत्यादिषु प्रथमाविधानाय। अन्ये नियतलिङ्गकाः अलिङ्गकाः वा शब्दाः लिङ्गमात्रे प्रथमेत्यंशस्योदाहरणानि सन्ति। एवञ्च द्रोणशब्दस्य नियतलिङ्गकत्वे अनियतलिङ्गकत्वे वा लिङ्गमात्रे प्रथमेत्यंशेनैव द्रोणादिशब्देभ्यः प्रथमायां सिद्धायां परिमाणग्रहणं व्यर्थमित्याशयः परिमाणग्रहणं किमिति काशिकाग्रन्थस्यावधारितः। पुनः काशिकाग्रन्थमयम्भावः इत्युव् त्या व्याचष्टे। येनार्थेन विना प्रकृतेरप्रयोगः तस्मिन्नर्थे[18] प्रथमा इत्यर्थकेन **अर्थे प्रथमा** इत्यंशेन अप्राप्तावपि लिङ्गमात्रे प्रथमा इत्यंशेन वा प्रथमा भवति। यदा तु द्रोणादयः शब्दाः स्वशक्यार्थे परिमाणविशेषद्रोणे भवन्ति तदा लिङ्गमात्रे प्रथमेत्यंशेनैव द्रोणः, खारी, आढकमित्यादौ प्रथमायां सिद्धायां परिमाणग्रहणं व्यर्थम्, परन्तु यदा द्रोणादिशब्दानां तत्परिमितव्रीह्यादिषु प्रयोगः तत्परिमितानां व्रीहिणाञ्चानियतत्वादर्थे प्रथमा लिङ्गमात्रे प्रथमा वा इत्यंशेन प्रथमायामप्राप्तायां प्रथमाविधानाय परिमाणग्रहणं सार्थकम्। तथा चोक्तं द्रोणादयश्च लौहं दारुमयं परिमाणमेवार्थं न व्यभिचरन्ति। यदा तु द्रोणादिपरिमिते व्रीह्यादौ वर्तन्ते तदा तस्य व्यभिचारितत्वात् न स्यादिति। निष्कर्षतः पदमञ्जरीकारमते सूत्रस्थपरिमाणग्रहणं गौणेषु परिमेयेषु व्रीह्यादिषु यत्र द्रोणादीनां प्रयोगः तदा प्रथमाविधानायावश्यकम्।

एवं यदा द्रोणादय शब्दाः द्रोणपरिमितव्रीह्यादिपराः तदा प्रथमाविधानाय परिमाणग्रहणमिति इत्याशयं काशिकाग्रन्थस्योपवर्ण्य पुनः गौर्वाहीकः इत्यत्र प्रथमायाऽनुपपत्तिमाशङ्क्य गौणे मुख्ये वा यत्र गोशब्दः तत्र प्रथमा लिङ्गमात्रे प्रथमेत्यंशेनैव प्रथमां विधाय द्रोणादिशब्देभ्योऽपि लिङ्गमात्रे प्रथमेत्यंशेनैव प्रथमा सिद्ध्यतीति कृत्वा परिमाणग्रहणं चिन्त्यप्रयोजनमित्युक्तम्। यद्यपि एतेषां विचारपद्धतिः नागेशसम्मता एव किन्तु व्याख्यानं तद्विरुद्धम्। एतेषां मते द्रोणशब्दः द्रोणत्वेन परिमाणविशेषं द्रोणं ब्रूते नागेशमते द्रोणशब्दः परिमाणाभिन्नद्रोणं ब्रूते। अत एव परिमाणत्वेन परिमाणस्याधिकस्य भानात् नागेशमते प्रथमाविधानाय परिमाणग्रहणमावश्यकम्। पदमञ्जरीकारमते द्रोणशब्देन द्रोणत्वेन द्रोणपदार्थस्य भानम्, न तु परिमाणत्वेन परिमाणस्याऽपि अत एव एतन्मते कुमारी, वृक्षः इत्यादिवत् द्रोणः, खारी, आढकमित्यत्रऽपि लिङ्गमात्रे प्रथमेत्यंशेनैव प्रथमायां सिद्धायां परिमाणग्रहणं नावश्यकम्।

अत्र न्यासकारः यदा द्रोणादयः शब्दाः परिमाणे लौहे दारुमये वा अर्थान्तरनिरपेक्षा प्रयुज्यन्ते तदा प्रातिपदिकार्थत्वादेव प्रथमा सिद्ध्यति। परन्तु यदा सोऽयमित्यभेदोपचारात् परिमेयेषु व्रीह्यादिषु द्रोणादयः शब्दाः प्रयुज्यन्ते तदा द्रोणादिशब्दानां गौणेषु परिमेयभूतेषु व्रीह्यादिष्वर्थेषु विद्यमानात् प्रथमा न प्राप्नोति अतः सूत्रे परिमाणग्रहणम्। तथा च यदा द्रोणशब्दात् द्रोणपदार्थस्य परिमाणविशेषस्य बोधः तदा प्रातिपदिकार्थत्वात् प्रथमा सिद्ध्यति। यदा तु द्रोणशब्दात् लक्षणया द्रोणपरिमितव्रीहेर्बोधः तदा गौणत्वात् प्रथमायामप्राप्तायां प्रथमाविधानाय परिमाणग्रहणम्। तथा चोक्तम् - **परिमाणग्रहणञ्च यत्र निमित्तादर्थान्तरे सोऽयमित्यभेदसम्बन्धाच्च शब्दः प्रवर्तते, तदुपलक्षणार्थं वेदितव्यमिति**[19]।

कैयटस्तु अथ परिमाणग्रहणं किमर्थम्? द्रोणः, खारी, आढकमित्यत्रपि यथा स्यादिति भाष्यम् व्याचक्षाणो **यदा मानमेयसम्बन्धात् व्रीह्यादौ द्रोणादयो वर्तन्ते तदा व्यभिचारान्नास्ति मेयस्य प्रातिपदिकार्थत्वमिति**[20] **प्राह**। एतन्मतेऽपि यदा द्रोणादयः शब्दाः परिमाणविशेषे वर्तन्ते तदा प्रातिपदिकार्थत्वादेव प्रथमा सिद्ध्यति। परन्तु यदा मानमेयसम्बन्धेन लक्षणया द्रोणादिशब्दानां व्रीह्यादिषु मेयेषु प्रयोगः तदा व्रीह्यादीनां मेयानामनियतत्वात् प्रातिपदिकार्थमात्रे इत्यंशेन लिङ्गमात्रे इत्यंशेन वा अप्राप्तायां प्रथमायां परिमेयेष्वर्थेषु प्रथमाविधानाय परिमाणग्रहणम्। एवञ्च एतन्मते परिमीयते परिच्छिद्यते यत् तत् परिमाणमिति व्युत्पत्या परिमाणशब्दः परिमेयपरः। तथा चोक्तमुद्योते - परिमाणशब्दे च कर्मणि ल्युट्, परिमेये इत्यर्थ इति तात्पर्यम्[21]।

**नागेशसम्मतं परिमाणग्रहणप्रयोजनम् -**

नागेशमते परिमाणग्रहणं नेष्टशाब्दबोधाय, अपि तु प्रथमाविधानाय। तथा हि द्रोणशब्दः परिमाणाभिन्नद्रोणं ब्रूते। एवञ्च यथा तटादिशब्दजन्यशाब्दबोधे प्रकारतया भासमानं स्त्रीत्वादिलिङ्गं न प्रातिपदिकार्थः तद्वत् द्रोणपदजन्यशाब्दबोधेऽभेदसम्बन्धेन प्रकारतया भासमानः परिमाणरूपोऽर्थः न प्रातिपदिकार्थः, प्रवृत्तिनिमित्ततदाश्रययोरेवात्र प्रातिपदिकार्थशब्देन ग्रहणात्। अतः परिमाणस्य प्रातिपदिकार्थभिन्नत्वे स्त्रीत्वादिलिङ्गभिन्नत्वेन च द्रोणशब्दात् प्रातिपदिकार्थमात्रे प्रथमेत्यंशेन वा अप्राप्तायां प्रथमायां प्रथमाविधानाय परिमाणग्रहणं न तु दीक्षितोक्तेष्टशाब्दबोधाय। अतोऽत्र प्रातिपदिकार्थापेक्षया लिङ्गापेक्षया च परिमाणमात्रमधिकं भासते तत्रपि प्रातिपदिकात् स्वार्थे प्रथमा न परिमाणार्थे प्रथमा। एवञ्च एतन्मते द्रोणः, खारी, आढकमित्येकैकं परमेवोदाहरणं न तु द्रोणो व्रीहिरिति वाक्यम्। अन्यथा एतन्मते द्रोणशब्दात्परिमाणाधिक्ये प्रातिपदिकार्थे प्रथमाया विधानात् प्रथमायाः अतिरिक्तार्थाभावेन प्रकृत्यर्थः परिमाणाभिन्नद्रोणरूपनामार्थः एव व्रीहिरूपनामार्थेऽन्वेति। तथा सति **निपातातिरिक्तनामार्थयोरभेद एव संसर्गः** इति नियमात् परिमाणाभिन्नद्रोणाभिन्नो व्रीहिरित्यनिष्टः शाब्दबोधः प्रसज्येत। अत एव भाष्यकृता द्रोणः, खारी, आढकमित्येवोदाहरणं दत्तम्। तथा चोक्तं भाष्ये - **अथ परिमाणग्रहणं किमर्थम् ? द्रोणः, खारी, आढकमित्यत्रपि यथा स्यादिति।**

किञ्च परिमाणेऽर्थे प्रथमां विधाय प्रत्ययार्थस्य परिमाणसामान्यस्य परिच्छेद्यपरिच्छेदकभाव- सम्बन्धेन व्रीहिपदार्थेऽन्वयं स्वीकृत्य द्रोणो व्रीहि इति वाक्यस्य साधुत्वाङ्गीकारे **तिङ्गसमानाधिकरणे प्रथमा**[22] इति वार्तिकविरोधोऽपि समायाति। तथा हि - रामोऽस्तीत्यत्र तिङ्गसामानाधिकरण्यात् रामशब्दात् प्रथमाविभक्तिर्भवति। तिङ्गसामानाधिकरण्यन्नाम तिङ्गवाच्यकारकवाचकत्वम्। प्रकृते: तिङस्तीत्यत्र तिप्रत्ययः तद्वाच्यं कर्तृकारकं तच्च रामपदार्थः तद्वाचकं राम इति प्रातिपदिकं तस्मात् प्रथमाविभक्तिर्भवति। **रामेण ग्रामो गम्यते** इत्यत्र तिङ् **गम्यते** इत्यत्र **तेप्रत्ययः** तद्वाच्यं कर्मकारकम्, तच्च ग्रामपदार्थः तद्वाचकात् ग्रामप्रातिपदिकात्प्रथमाविभक्तिः। एवमेव **सुन्दरो रामोऽस्तीत्यत्र** तिङ् **अस्तीत्यत्र तिप्रत्ययः** तद्वाच्यं कर्तृकारकं तच्च रामपदार्थः तदभिन्नःसुन्दरपदार्थः। अतः सोऽपि कर्ता एव। तथा च तद्वाचकादपि सुन्दरप्रातिपदिकादपि प्रथमा सिद्ध्यति। **राज्ञः पुरुषः अस्ति** इत्यत्र तिङ्वाच्यकर्तृपुरुषपदार्थवाचकात् पुरुषरूप्रातिपदिकात् प्रथमा भवति न तु राजनशब्दात्। राजपदार्थः न तिङ्वाच्यकर्तृकारकं न वा तिङ्वाच्ये कर्तृकारके पुरुषपदार्थेऽभेदेनान्वितः। अतः राजन्शब्दे तिङ्सामानाधिकरण्याभावेन न प्रथमा, अपितु स्वस्वामिभावसम्बन्धे भाष्ठी। प्रकृते द्रोणो व्रीहिरित्यत्र द्रोणरूपपरिमाणस्य व्रीहिपदार्थे परिच्छेद्यपरिच्छेदकभावसम्बन्धेनान्वये अध्याहृतास्तित्रि या-वाचकपदघटकतिङ्वाच्यं कर्तृकारकं व्रीहिः न तु द्रोणपदार्थः न वा व्रीहिपदार्थे द्रोणपदार्थोऽभेदेनान्वितः। अतः तिङ्वाच्यकारकवाचकत्व-रूपसामानाधिव रण्यस्य द्रोणप्रातिपदिकेऽभावेऽपि प्रथमाविधाने **तिङ्समानाधिकरणे** इति वार्तिकविरोधः स्पष्ट एव। नागेशमते द्रोणः इत्येव उदाहरणम्। तथा सति **अस्तीति** त्रि याध्याहारेतिङ्वाच्यं कर्तृकारकम्, तच्च द्रोणपदोपस्थापितः परिमाणाभिन्नद्रोणः, तद्वाचकात् द्रोणरूपप्रातिपदिकात् प्रथमायां न वार्तिकविरोधः। एवञ्च परिच्छेद्यपरिच्छेदकभाव- सम्बन्धावगाहादिशाब्दबोधजनकं दीक्षितोक्तं द्रोणो व्रीहिरितिवाक्यमप्रमाणिकम्। यदा तु द्रोणशब्दात् स्वार्थे प्रथमां विधाय द्रोणो व्रीहिरितिवाक्येऽभेदान्वयानुपपत्या द्रोणपरिमिते लक्षणां कृत्वा द्रोणशब्देनोपस्थितस्य परिमाणाभिन्नद्रोणपरिमितरूपस्य लक्ष्यार्थस्य व्रीहिपदार्थेऽन्वये परिमाणाभिन्नद्रोणपरिमिताभिन्नो व्रीहिरितिशाब्दबोधावगाहि द्रोणो व्रीहिरिति वाक्यं साधु।

न च नागेशमते द्रोणशब्दैनैव परिमाणार्थस्योपस्थितौ द्रोणः परिमाणमितिवाक्यप्रयोगो न स्यादिति वाच्यम्, द्वौ ब्राह्मणौ इतिवत् द्योतकवाचकसमुच्चयदर्शनात्, द्रोणस्य काकादौ शक्तत्वेन तद्व्यावृत्तये परिमाणमिति कथनस्यावश्यकत्वाच्च। किञ्च द्रोणो व्रीहिरित्यत्र द्रोणरूपपरिमाणस्य परिच्छेद्यपरिच्छेदकभावसम्बन्धेन

व्रीहिपदार्थेऽन्वयस्वीकारे द्रोणो व्रीहिमानय इत्यस्यापत्तिः। यतोऽभेदान्वयबोधम्प्रति समानविभक्त्यन्तपदजन्योपस्थितिः कारणन्न तु भेदान्वयबोधम्प्रति। एवञ्च राज्ञः पुरुषमानय इतिवद् द्रोणो व्रीहिरितिवाक्यं साधु स्यात्। अनभिधानकल्पने संकुचितकार्यकारणभावाङ्गीकारे वा महद् गौरवम्। तथा चोक्तम् – मूलोक्तं तु न युक्तम्, व्रीहिमानये[23]त्यस्यापत्तेः।

न च परिमीयते परिच्छिद्यते यत् तत् परिमाणम् इति कर्मव्युत्पत्त्या परिमाणशब्दस्य मेयपरत्वे मेयस्य व्रीह्यादेरनियतोपस्थितिकत्वेन अप्राप्तप्रथमाविधानाय परिमाणग्रहणमावश्यकमिति वाच्यम्, प्रमाणाभावात् नियतोपस्थितिकार्थस्यात्रग्रहणादन्यथा **सिहो माणवकः** इत्यत्रपि लक्ष्यार्थस्य माणवकादेरनियतोपस्थितिकत्वे प्रथमा न स्यात्। यदि च शक्यार्थमादाय प्रथमायाः साधुत्वमुच्यते तर्हि अत्रपि परिमाणशब्दस्य परिच्छेदकपरत्वेऽपि शक्यार्थे प्रथमामादाय लक्षणया मेयार्थस्य बोधसम्भवात्। अतः कैयटोक्तमविचारितरमणीयम्।

**विमर्शः**– दीक्षितमते प्रातिपदिकार्थशब्देनात्र नीयतोपस्थितिकार्थस्य ग्रहणात् नियतलिङ्गकाः अलिङ्गकाश्च शब्दाः लिङ्गमात्रे प्रथमा इत्यंशस्य चोदाहरणानि भवन्ति। एवञ्च एतन्मते द्रोणो व्रीहिरिति वाक्ये द्रोणशब्दस्य नियतलिङ्गकत्वे प्रातिपदिकार्थमात्रे प्रथमेत्यंशेन नियतलिङ्गकत्वे लिङ्गमात्रे प्रथमेत्यंशेन वा प्रथमायां सिद्धायां परिमाणग्रहणं प्रातिपदिकेनाप्रतीयमाने परिमाणत्वेन परिमाणसामान्ये प्रथमाविधानद्वारा द्रोणो व्रीहिरिति वाक्यात् द्रोणाभिन्नं यत्परिमाणं तत्परिच्छिन्नो व्रीहिरितीष्टशाब्दबोधाय।

प्रातिपदिकार्थे प्रथमायान्तु प्रत्ययस्य प्रातिपदिकार्थद्योत्तकत्वेनातिरिक्तार्थाभावेन द्रोणरूपनामार्थस्य- व्रीहिरूपनामार्थेऽन्वयोवाच्य। स च **निपातातिरिक्तनामार्थयोरभेद** एव संसर्गः इति नियमेनाभेद एव भवति। तथा सति द्रोणोव्रीहिरिति वाक्यात् द्रोणाभिन्नों व्रीहिरिति अनिष्टः शाब्दबोधः प्रसज्येत। अतः परिमाणत्वेन परिमाणसामान्ये प्रथमा विधानद्वारा इष्टशाब्दबोधः परिमाणग्रहणस्य प्रयोजनम्।

न च भेदान्वयबोधं प्रति सामानविभक्त्यन्तपदजन्योपस्थितेरकारणत्वात् द्रोणोव्रीहिमानय इति प्रयोगापत्तिरिति वाच्यम्, प्रत्ययार्थपरिमाणप्रकारक भेदसंसर्गक शाब्दबोधे समानविभक्त्यन्तपदजन्योपस्थितेः कारणत्वकल्पनात्। एवञ्च द्रोणोव्रीहिरित्यत्र प्रत्ययार्थपरिमाणप्रकारकशाब्दबोधस्यसत्त्वेन तादृशबोधाय समानविभक्तिकत्वस्य कारणत्वात् न द्रोणो व्रीहिमानयेत्यस्यापत्तिः।

न च परिमाणार्थेप्रथमां विधाय द्रोणाभिन्नपरिमाणस्य परिच्छेद्यपरिच्छेदकभावेन व्रीहिपदार्थेऽन्वये द्रोणौ व्रीहिरित्यत्रध्याहृतास्तित्रि या पदघटक तिङ्वाच्यकारकवाचकत्वरुप सामानाधिकरणस्य द्रोणप्रातिपदिकेऽभावेऽपि प्रथमाविधाने **तिङ्समानाधिकरणेप्रथमा** इति वार्तिकविरोध इति वाच्यम्? तिङ्समानाधिकरणे प्रथमैवेति अर्थनियमस्याङ्गीकारात्, अत एव अधिकरणशक्तिप्रधानेव उच्चैः नीच्चैः इत्यादिषु अव्ययेषु अपि तिङ्समानाधिकरणाभावेऽपि प्रथमासिद्ध्यति।

ननु प्रत्ययार्थपरिमाणस्य परिच्छेद्यपरिच्छेदकभावरूपभेदसम्बन्धेनान्वयाङ्गीकारे सर्पिः कुडवमित्यादौ समानाधिकरणमसमर्थवदिति, अतिदेशाऽप्रवृत्त्या **इसुसोः सामर्थ्ये** इति वत्वविकल्पापत्तिरिति चेन्न। **तिरसोऽन्यतरस्याम्** इति सूत्रदन्यतरस्यामित्यनुवर्त्य व्यवस्थितविभाषाश्रयणेनाऽऽपत्तिविरहात्।

न च द्रोणो व्रीहिरित्यत्र द्रोणपरिमितानां व्रीहिणामनेकत्वादेकवचनमसाधुरिति वाच्यम्? जातिपक्षाश्रयणेनैकवचनस्य साधुत्वात्। व्यक्तिपक्षे तु द्रोणो व्रीहयरिति इष्टमेव। एवञ्च दीक्षितमते समेषां दूषणानां समाधाने सत्यपि दीक्षितमतं न रोचते मह्यम्। यतोहि द्रोणप्रातिपदिकात् प्रातिपदिकार्थे प्रथमायामपि द्रोणो व्रीहिरित्यत्र द्रोणशब्दस्य द्रोणपरिमिते लक्षणायामभेदान्वये द्रोण परिमिताभिन्नो व्रीहिरिति इष्टस्य शाब्दबोधस्य सत्त्वेन सूत्रस्य परिमाणग्रहणस्य सार्थक्यप्रतिपादनं दुष्करम्। ध्वनितञ्च स्वयमेव मनोरमायामर्थे प्रथमेत्येवसारमित्युव्

त्या। परिमाणग्रहणस्य परिच्छेद्यपरिच्छेदकभावसंसर्गबोधायावश्यकत्वेऽर्थे प्रथमा इत्येव सारमिति कथनमित्युक्तमेव स्यात्।

किञ्च प्रकृतिप्रत्ययार्थयोरभेदान्वयस्यादृष्टत्वात् द्रोणो व्रीहिरित्यत्र प्रकृतिप्रत्ययार्थयोरभेदकथनमप्ययुक्त मेव। यदि च मूलोक्तदिशा देवतार्थकतद्धितस्थले प्रकृतिप्रत्ययार्थयोरभेदन्वयः दृष्टः इत्युच्यते तदपि न युक्तम्। वैयाकरणनये तद्धितादिषु वृत्तिषु एकार्थीभावाङ्गीकारेण तत्रैकार्थोपस्थित्यान्वयाभावात्।

किञ्च प्रातिपदिकार्थे प्रथमायां द्रोणशब्दस्य द्रोणपरिमिते लक्षणायां द्रोणो व्रीहिरितिवत् द्रोणं व्रीहिमानय, द्रोणेन व्रीहिणा कृतमित्यादिवाक्यानामपि साधुत्वमिष्टम्। परिमाणार्थे प्रथमायान्तु द्रोणो व्रीहिमानय इतिवत् द्रोणं व्रीहिमानय इत्यस्यापि अनिष्टत्वेनार्थे प्रथमा इत्येव सारमिति स्वोक्तिविरोधः।

नागेशमते द्रोणशब्दः न केवलं द्रोणत्वेन द्रोणं ब्रूते अपितु परिमाणाभिन्नद्रोणं ब्रूते। एवञ्च द्रोणपदजन्यबोधे परिमाणत्वेन परिमाणमपि द्रोणपदार्थेऽभेदेन प्रकारतया भासते। प्रातिपदिकार्थशब्देनात्र लिङ्गग्रहणसामर्थ्यात् प्रवृत्तिनिमित्ततदाश्रयोरेव ग्रहणेन परिमाणाभिन्नद्रोणवाचकात् द्रोणत्वप्रवृत्तिनिमित्तकात् द्रोणप्रातिपदिकात् परिमाणाधिक्ये प्रातिपदिकार्थमात्रे प्रथमेत्यंशेन लिङ्गमात्रे प्रथमेत्यंशेन वा अप्राप्तायां प्रथमायां प्रथमाविधानाय परिमाग्रहणन्तु इष्टशाब्दबोधाय। एवञ्च परिमाणमात्रे इत्यंशेन विधीयमाना प्रथमा लिङ्गादिवत् प्रातिपदिकार्थे परिमाणञ्चेह द्रोणशब्दवाच्यं प्रत्ययद्योत्यञ्च भवति। अत एव परिमाणमात्रे इत्यस्य द्रोणः, खारी, आढकमिति पदान्येवोदाहरणानि भवन्ति न तु द्रोणो व्रीहिरिति वाक्यम्। एवञ्चैतन्मते **द्रोणः** इति पदात् परिमाणाभिन्नद्रोणरित्यर्थः प्रतीयते। दीक्षितमते द्रोणाभिन्नं परिमाणमिति **द्रोणः** इति पदात् प्रतीयते।

न च **द्रोणः** इत्यत्र प्रातिपदिकार्थमात्रे प्रथमायां द्रोणो व्रीहिरित्यत्र **निपातातिरिक्तनामार्थयोरभेदे एव संसर्गः** इति नियमेनाभेदान्वये परिमाणाभिन्नद्रोणाभिन्नव्रीहिरित्यनिष्टः शाब्दबोधः स्यादिति वाच्यम्। द्रोणशब्दस्य द्रोणपरिमिते लक्षणायामभेदान्वयबोधस्य इष्टत्वात्। अतः द्रोणशब्दस्य द्रोणपरिमिते लक्षणायामिष्टशाब्दबोधोपपत्तौ परिमाणग्रहणमिष्टशाब्दबोधायेति दीक्षितमतमविचारितरमणीयम्।

न च द्रोणशब्देनैव परिमाणत्वेन परिमाणस्यापि लाभत् द्रोणः परिमाणमिति प्रयोगानुपपत्तिरिति वाच्यम्। द्वौ ब्राह्मणौ इत्यत्र द्योतकवाचकसमुच्चयस्य दर्शनेन द्रोणशब्देन परिमाणलाभेऽपि पुनः परिमाणपदप्रयोगेऽनुपपत्ति विरहात्।

न च द्रोणादिशब्दानां द्रोणत्वात् परिमाणत्वमपि प्रवृत्तिनिमित्तमिति वाच्यम्। प्रवृत्तिनिमित्तभेदे शक्तिभेदापत्ते अत एव नानाप्रवृत्तिनिमित्तकानां हर्यादिशब्दानां नानाशक्तिमत्त्वम्।

किञ्च नानाप्रवृत्तिनिमित्तकानां हर्यादिशब्दानां न यौगपद्येन सर्वेषामर्थानां विशेष्यविशेषणभावेन वा बोधो भवति तथैव प्रकृतेऽपि द्रोणशब्दात् परिमाणार्थस्य द्रोणपदार्थस्य च यौगपद्येन परिमाणाभिन्नद्रोणरिति विशेष्यविशेषणभावेन वा बोधानापत्तिः स्यात्। अतः द्रोणशब्दस्य परिमाणत्वमपि प्रवृत्तिनिमित्तमिति न युक्तम्।

भाष्यकृतापि परिमाणग्रहणस्य द्रोणः, खारी, आढकमित्यादीनि पदान्येवोदाहरणानि दत्तानि। काशिकाकारोऽपि द्रोणः, खारी, आढकमिति पदानि परिमाणग्रहणस्योदाहरणानि प्रदर्श्य नागेशमतमेव युक्तमिति प्रमाणयति। अतः दीक्षितोक्तं भाष्यविरिद्धत्वात् गौरवाच्च न युक्तं प्रतिभाति। अतः भाष्यसम्मतत्त्वात् लाघवाच्च नागेशमतमेव ज्यायः।

यदि तु प्रतीतिबलात् द्रोणशब्दस्य द्रोणत्वावच्छिन्ने शक्तिः न तु परिमाणाभिन्नद्रोणे परिमाणबोधस्तु प्राकरणिकस्तदा द्रोणशब्दात् प्रातिपदिकार्थमात्रे प्रथमेत्यंशेन लिङ्गमात्रे प्रथमेत्यंशेन वा प्रातिपदिकार्थे प्रथमायां सिद्धायां परिमाणग्रहणं चिन्त्यप्रयोजनम्। द्रोणो व्रीहिरित्यत्र तु लक्षणयाऽपि इष्टशाब्दबोधः सम्भवति अत एव

अर्थे प्रथमा इत्युक्तिरसङ्गत एव स्यात्। यद्यपि अर्थे प्रथमा इत्युक्तिः द्रोणशब्दस्य परिमाणाभिन्नद्रोणे शक्तिरिति नागेशमतेऽपि सङ्गच्छते तथापि द्रोणशब्दस्य लाघवात् प्रतीतिबलात् द्रोणः परिमाणमिति प्रयोगबलाच्च द्रोणशब्दस्य द्रोणे एव शक्तिः न तु परिमाणाभिन्नद्रोणे। एवञ्च परिमाणग्रहणं चिन्त्यप्रयोजनम्। तथा च पदमञ्जर्याम् - तदेतत्परिमाणग्रहणं चिन्त्यप्रयोजनम्।

द्रोणशब्दस्य द्रोणमात्रे शव् त्यङ्गीकारे लक्ष्यासिद्ध्यभावेऽपि अथ परिमाणग्रहणं किमर्थम्? द्रोणः, खारी, आढकमित्यत्रपि यथा स्यादिति भाष्यविरोधोऽस्त्येव। द्रोणशब्दस्य द्रोणत्वावच्छिन्ने द्रोणमात्रे शव् त्यङ्गीकारे द्रोणशब्दादपि लिङ्गमात्रे प्रथमायां सिद्धायां परिमाणग्रहणस्य द्रोणः, खारी, आढकमिति प्रयोजनकथनमसङ्गतमेव स्यात्। अत एव नागेशेन द्रोणशब्दस्य न केवलं द्रोणमात्रे शक्तिरङ्गीकृता, अपि तु परिमाणाभिन्ने द्रोणे। तथा सति परिमाणाधिक्येऽप्राप्तायां प्रथमायां परिमाणग्रहणस्य द्रोण, खारी, आढकमित्युदाहरणं भाष्योक्तं सङ्गच्छते।

**सन्दर्भटिप्पण्यः**

1. वैयाकरणसिद्धान्तकौमुद्यां प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमेति सूत्रवृत्तौ पृ.सं-592।
2. काशिकाग्रन्थे प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमेति सूत्रवृत्तौ पृ.सं- 201
3. प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमेति सूत्रभाष्ये पृ.सं- 301।
4. पा. सू. 2/3/46पृ.सं- 18।
5. अमरकोशे 2 काण्ड 9 वर्ग 88श्लो. पृ.सं- 161।
6. इयं व्युत्पत्तिःप्रातिपदिकार्थसूत्रव्याख्यावसरे मनोरमायां शब्दरत्ने चोद्धृता पृ.सं-मनो.-613,शब्दरत्न-615।
7. प्रातिपदिकार्थसूत्रव्याख्यायां सिद्धान्तरत्नाकरे पृ.सं- 3।
8. प्रातिपदिकार्थसूत्रव्याख्यायां लक्ष्मीटीकायाम् पृ.सं-771।
9. कौमुदीमूलार्थविद्योतिन्यां प्रातिपदिकार्थसूत्रव्याख्यायाम् पृ.सं-122।
10. प्रातिपदिकार्थसूत्रव्याख्याने लक्ष्मीटीकायाम् पृ.सं-771।
11. कौमुदीमूलार्थविद्योतिन्यां प्रातिपदिकार्थसूत्रव्याख्यायाम् पृ.सं-122।
12. पा. सू. 8/3/44 पृ.सं-103।
13. पा. सू. 8/3/42 पृ.सं-103।
14. शब्दरत्नग्रन्थे प्रातिपदिकार्थसूत्रव्याख्याने पृ.सं-720।
15. काशिकाग्रन्थे प्रातिपदिकार्थसूत्रव्याख्याने पृ.सं-201।
16. पदमञ्जर्या प्रातिपदिकार्थसूत्रव्याख्याने पृ.सं-203।
17. वार्तिकमिदं कृत्तद्धितसमासश्चेतिसुत्रस्थप्रौढमनोरमायाम् पृ.सं-282।
18. पदमञ्जर्यां प्रातिपदिकार्थसूत्रव्याख्याने पृ.सं-203।
19. न्यासग्रन्थे प्रातिपदिकार्थसूत्रव्याख्याने पृ.सं-204।
20. प्रातिपदिकार्थसूत्रभाष्ये प्रदीपटीकायाम् पृ.सं-301।
21. प्रातिपदिकार्थसूत्रभाष्ये उद्योतटीकायाम् पृ.सं-301।
22. इदं वार्तिकं प्रातिपदिकार्थेतिसूत्रभाष्ये वर्तते पृ.सं-306।
23. लघुशब्देन्दुशेखरे प्रातिपदिकार्थसूत्रव्याख्याने पृ.सं-605।

## सन्दर्भग्रन्थसूची


| क्र.सं. | ग्रन्थनाम | लेखकः | प्रकाशकः | वर्षम् |
|---|---|---|---|---|
| 1. | वैयाकरणसिद्धान्तकौमुदी (बालमनोरमा-तत्त्वबोधिनी टीकासहिता-प्रथमो भागः) | श्रीमद्भट्टोजिदीक्षितः | मोतीलालबनारसीदासः वाराणसी | 2010 |
| 2. | काशिका (न्यासपदमञ्जरीसहिता-द्वितीयो भागः) | वामनजयादित्यौ | प्राच्यभारतीप्रकाशन, वाराणसी | 1965 |
| 3. | महाभाष्यम् (प्रदीपोद्योतसहितम्) | पतञ्जलिः | रा.सं.सं.नई दिल्ली | 2006 |
| 4. | अष्टाध्यायीसूत्रपाठः | पाणिनिः | ज्ञानभारती पब्लिकेशन्स, दिल्ली | 2009 |
| 5. | अमरकोशः (रत्नप्रभाटीकासहितः) | अमरसिंहः | चौखम्भासुरभारती प्रकाशन, वाराणसी | 2004 |
| 6. | प्रौढमनोरमा शब्दरत्नम् | भट्टोजिदीक्षितः हरिदीक्षितः | वाणीविलासप्रकाशनम् कचौड़ी गली वाराणसी -4 | 1977 |
| 7. | सिद्धान्तरत्नाकरः (वैयाकरणसिद्धान्त-कौमुदीटीका) | भट्टश्रीरामकृष्णः | रा.सं.सं.भोपालपरिसरः | 2004 |
| 8. | लक्ष्मी(वैयाकरणसिद्धान्त-कौमुदीटीका) | सभापतिशर्मोपाध्यायः | मोतीलालबनारसीदासः, वाराणसी | 1966 |
| 9. | कौमुदीमूलार्थविद्योतनी | दीनबन्धुझाः | कामेश्वरसिंह-दरभङ्गा-संस्कृत-वि.वि. | 1986 |
| 10. | पदमञ्जरी (काशिकाटीका) | हरदत्तमिश्रः | | |
| 11. | न्यासः(काशिकाटीका) | जैनेन्द्रबुद्धिः | | |
| 12. | लघुशब्देन्दुशेखरः (चन्द्रकलाटीकासहितःप्रथमो भागः) | नागेशभट्टः | चौखम्भासंस्कृतसंस्थानम्, वाराणसी | 2001 |



**डा. ब्रजभूषण ओझा**
*सहायकाचार्यः, व्याकरणम्*
*राष्ट्रियसंस्कृतसंस्थानम्, लखनऊपरिसरः, विशालखण्डः-4,*
*गोमतीनगरम्, लखनऊ (उ.प्र.)*




# श्रीनिवासरथविरचित "बलदेवचरितम्" महाकाव्य में युगबोध

जर्नादन प्रसाद पाण्डेय 'मणि'

*'बलदेवचरितम्' महाकाव्य आचार्य बलदेव उपाध्याय को नायक बनाकर उनके चरित्र को लोक तक पहुँचाने के उद्‌देश्य से उनके शिष्य प्रवर आचार्य श्रीनिवासरथ द्वारा विरचित है। अभी तक इसके पाँच सर्ग ही प्रकाश में आये हैं। अग्रेजों के भारत में आने के पश्चात् उनके रहन सहन, विचार, वेप-भूषा एवं शिक्षा पद्धति को अपनाने के बाद से भारतीय इतिहास का जो आधुनिक कालखण्ड आरम्भ होता है, उस आधुनिक कालखण्ड में भी भारतीय पारम्परिक शिक्षा, चिन्तन की दैवी पृष्ठभूमि, भगवदवतारों की परिकल्पना, स्वप्न में देवानुग्रह एवं देवनिर्देश की अनुभूति, आत्मगौरव का आत्मनाद, लोकोपकार की भावना, पारतन्त्रिक जीवन के प्रति विद्रोह का भाव, समष्टि के कल्याण का प्रयास तथा दुष्ट शासन के प्रतिरोधविषयक चिरन्तन युगीन भावबोध उसी दृढ़ता एवं ऊर्जा के साथ व्याप्त थे। आचार्य बलदेव उपाध्याय का सारस्वत व्यक्तित्व इस सम्पूर्ण भावराशि का निदर्शन था। इनके दर्शन चिन्तन के आलोक में आचार्य श्रीनिवासरथ ने सम्पूर्ण भारतीय युग बोध को, वैश्विक आन्दोलित चिन्तन को अपने ग्रन्थ में उकेरा है। जिससे साहित्य समाज का दर्पण है यह कथन चरितार्थता को प्राप्त हुआ है।*

'बलदेवचरितम्' आचार्य श्रीनिवासरथ विरचित आधुनिक युग का नवीनतम महाकाव्य है। यह ग्यारह सर्गों का कवि द्वारा परिकल्पित है। इसका रचना कार्य अभी जारी है। पाँच सर्गों का प्रकाशन हो गया है। जिसके आधार पर महाकाव्य में प्रतिबिम्वित युगवोध से सहृदय पाठक कुछ परिचित हो पाता है।

संस्कृत महाकाव्य के इतिहास् का जब हम सर्वेक्षण करते हैं तो हमें विषयवस्तु की दृष्टि से संस्कृत महाकाव्य की तीन धारायें दिखाई पड़ती हैं। जिसमें पहली धारा पौराणिक इतिवृत्त गर्भा है। दूसरी धारा ऐतिहासिक इतिवृत्तगर्भा है तथा तीसरी धारा नितान्त नवीन महापुरुषचरित्रगर्भा है। 'बलदेवचरितम्' महाकाव्य संस्कृत महाकाव्य परम्परा की इसी तीसरी नितान्त जागरूक काव्यधारा में लिखा जा रहा महाकाव्य है। इसका नायक कोई राजा, राजनेता अथवा किसी सम्प्रदाय विशेष का अधिष्ठाता ऋषि महर्षि नहीं अपितु संस्कृत भाषा का एक प्रकाण्ड विद्वान् है, जिसे आचार्य बलदेव उपाध्याय के नाम से जाना जाता है। जिन्होंने काशी हिन्दू विश्वविद्यालय एवं सम्पूर्णानन्द संस्कृत विश्वविद्यालय वाराणसी को अपनी सेवायें दीं तथा जो जीवन के अन्तिम क्षणों तक संस्कृतसरस्वती देववाणी की सेवा करते हुए राष्ट्रभाषा हिन्दी को माध्यम बनाकर समीक्षात्मक ग्रन्थों का प्रणयन कर वाङ्मय की श्रीवृद्धि करते रहे।

इस सन्दर्भ से यह तो सर्वथा स्पष्ट हो जाता है कि बलदेवचरितम् महाकाव्य का नायक भी आधुनिक है तथा इसका रचनाकार भी आधुनिक है। इसके रचनाकार आचार्य श्री निवासरथ आचार्य बलदेव उपाध्याय के शिष्य रहे हैं। जो विक्रम विश्वविद्यालय उज्जैन के संस्कृत विभाग के विभागाध्यक्ष पद से तथा

कालिदास अकादमी उज्जैन के निदेशक पद से सेवा मुक्त होकर सम्प्रति महाकाल की नगरी में स्वतन्त्र रूप से काव्यलेखन में संलग्न हैं।

आधुनिक शब्द का प्रयोग आज के आज कल के अथवा आज के समय के अर्थ में प्रायः किया जाता है। जो आज का वर्तमान है वही कल का भूत हो जाता है। इस दृष्टि से प्रत्येक व्यक्ति प्रत्येक घटना प्रत्येक समस्या अपने समय में आधुनिक होती है। तत्कालीन साहित्य में उसकी अभिव्यक्ति होती है तथा इसके चलते साहित्य को समाज का दर्पण कहा जाता है।

आधुनिक-आधुनिकता एवं आधुनिकतावाद का एक अपर अर्थ क्रमशः पाश्चात्य विचारग्रस्त पाश्चात्य विचार पद्धति एवं पाश्चात्यसभ्यतासंस्कृतिवाद के रूप में भी ग्रहण किया जाता है। वर्तमान शिक्षापद्धति को पारम्परिक शिक्षा पद्धति एवं आधुनिक शिक्षा पद्धति के रूप में दो प्रकार से विभक्त किया जाता है। इसमें पारम्परिक शिक्षा पद्धति से आशय भारतीय गुरुकुल परम्परा एवं उपाधि के साथ ग्रहण की जाने वाली शिक्षा पद्धति से है। इस शिक्षा पद्धति से जुड़े विश्वविद्यालयों को पारम्परिक विश्वविद्यालय कहा जाता है। आधुनिक शिक्षा पद्धति से आशय लार्ड मैकाले द्वारा निरूपित एवं व्यवस्थापित शिक्षा पद्धति से है, जिसका आरम्भ अंग्रेजों के भारत में आगमन के बाद 1850 ई. से होता है। जब कलकत्ता, मद्रास एवं मुम्बई में उस पद्धति के विश्वविद्यालयों की स्थापना होती है तथा 1887 ई. में पूरब के ऑक्सफोर्ड के रूप में उत्तरप्रदेश में इलाहाबाद विश्वविद्यालय की स्थापना की जाती है। अंग्रेजों द्वारा अपनी शिक्षापद्धति से जुड़े विश्वविद्यालयों की स्थापना के मूल में एक ही भाव था, वह भाव था भारतीय शिक्षा पद्धति को अव्यावहारिक, सङ्कीर्ण एवं अनुपयोगी सिद्ध करना। भारतीयों को अपनी ही नजर से नीचे गिरा देना, जहाँ उन्हें अपनी ही शिक्षा अपनी ही संस्कृति अपनी ही सभ्यता एवं अपनी ही चीज मूल्यहीन एवं कमजोर दिखाई देने लगे। इसका क्या परिणाम हुआ, मैं इस कटुसत्य को तो नहीं कहना चाहता, किन्तु यह अवश्य कहना चाहता हूँ कि आज देश में पारम्परिक विश्वविद्यालय तो अङ्गुलिगण्य हैं, सारे विश्वविद्यायल आधुनिक विश्वविद्यालय ही हैं, क्योंकि यहाँ आधुनिक शिक्षा पद्धति से ही अध्ययन एवं अध्यापन हो रहा है।

मेरे उर्पयुक्त कथन का उद्देश्य मात्र पारम्परिकता एवं आधुनिकता के अन्तर को सङ्केतित करना है। यदि अंग्रेजी शिक्षा पद्धति सभ्यता एवं संस्कृति को हमने बहुत कम समय पूर्व प्रकाश में आने के नाते आधुनिक नाम दिया तो हमें उनके भारत में आगमन के बाद के कालखण्ड को आधुनिक कालखण्ड नाम देना चाहिए। क्योंकि विना एक कालखण्ड निर्धारित किए हुए हम आधुनिक संस्कृत साहित्य की सीमारेखा कैसे खींच सकते हैं? इसलिए हम अंग्रेजों के भारत आगमन के बाद से प्रवर्तमान काल खण्ड को आधुनिक कालखण्ड मानते हैं।

यह आधुनिक कालखण्ड विविध वैश्विक संस्कृतियों एवं सभ्यताओं, आदर्श एवं मूल्यों, नीति एवं शिक्षाओं तथा अभिरुचियों एवं मान्यताओं के अन्तर्द्वन्द्व का कालखण्ड है। इस बीच लिखा जा रहा संस्कृत साहित्य भावों व वेगों से असंस्पृष्ट नहीं है। क्योंकि इस कालखण्ड का संस्कृत कवि नितान्त जागरूक है। अपने काव्य की विषयवस्तु में आवश्यकता के अनुसार परिवर्तन किया है। परम्परा को सहेजते हुए भी परम्परा से बहुत दूर की भीं यात्रा की है। नये नये प्रतिमानों एवं आयामों का आवाहन किया है। महाकाव्य-खण्डकाव्य-स्तोत्रकाव्य- गीतिकाव्य-नाट्यसाहित्य एवं कथासाहित्य में पूर्वकाल से चले आ रहे कथानकों एवं सिद्धान्तों में परिवर्तन हुआ है। काव्यशास्त्रीयसिद्धान्तों में विकासशीलता की प्रायोगिक प्रतिष्ठा हुई है। तभी तो आचार्य श्रीनिवासरथ ने किसी देव एवं सद्वंश क्षत्रिय को अपने महाकाव्य का नायक न

बनाकर एक संस्कृतविद्वान् ब्राह्मण को अपने महाकाव्य का नायक बनाया है, उसका लोककल्याणकारी व्यक्तित्व समग्र काव्यशास्त्रीय परम्परा पर भारी है।

आधुनिक विषयवस्तु को लेकर महाकाव्य की रचना करने के कवि के प्रयास में भी एक युग बोध है। युगबोध कवि की जागरूकता की ही एक सार्थक संज्ञा है। कवि जिस युग में जी रहा है उस युग की आवश्यकताओं मान्यताओं संघर्षों विडम्बनाओं वरदानों एवं अभिशापों का यदि वह चितेरा नहीं होगा, लोक की एवं लोक रक्षक की नब्ज यदि वह नहीं टटोल पायेगा तो फिर सबको जीकर सत्यं शिवम् एवं सुन्दरम् की समन्विति से युक्त सर्वमङ्गला कविता की रचना वह कैसे कर पायेगा? इसलिए युगबोध किसी भी कवि के कविधर्म का सर्वाधिक लोकोपयोगी जीवनोपयोगी एवं युगोपयोगी तत्त्व है। जिसके बिना कवि की सारी साधना सारहीन है। अब प्रस्तुत है महाकवि श्रीनिवासरथ का युगबोध उनके महाकाव्य 'बलदेवचरितम्' के परिप्रेक्ष्य में-

'बलदेवचरितम्' महाकाव्य के अब तक प्रकाशित पाँच सर्गों को क्रमशः बलदेवावतारसर्ग, कर्जनविजृम्भितसर्ग, वाराणसीनिवर्तनसर्ग, मन्त्रदृष्टिसर्ग तथा वर्षाविलाससर्ग के नाम से जाना जाता है। कवि आचार्यबलदेवावतार को साम्प्रतिकयुग में शेषावतार के रूप में स्वीकार करता है। जैसे संसार में अधर्म एवं अन्याय को समाप्त करने के लिए भगवान् शेष कभी लक्ष्मण के रूप में तो कभी बलराम के रूप में अवतार लिए। व्याकरणशास्त्र की रक्षा के लिए भगवान् पतञ्जलि के रूप में आये वैसे ही अनूदितसंस्कृतज्ञानविरहितलोक को हिन्दी भाषा के माध्यम से वेद शास्त्र, दर्शन एवं साहित्य आदि की जानकारी देने के लिए सारस्वत ग्रन्थभण्डार का समृद्ध करने के लिए बलदेव के रूप में अवतार लिया। यथा-

**न स विवेद न मूर्तिमती स्वयं स्मृतवती कथिताऽपि कथान्वयम्।**
**परिचयेन विनाप्यनुभूयते भुवि रहस्यमयी भगवत्कृपा॥**
**चित्ते विशिष्य रजसा रहिते निबद्धा**
**श्रद्धा यथा फलवती भवतीह लोके।**
**रत्नोज्ज्वला वसुमतीव समृद्धदीप्ति-**
**मातृत्वमङ्गलमगाहत मूर्तिदेवी॥**
**शेषावतारमिव चारुचरित्रशीलं साऽसूत पुत्रमचिरात् कुलकीर्तियुक्तम्।**
**दृष्ट्वा सुतं कुजमगोचरमिन्द्रियाणां प्रीत्या दधौ जनयिताप्यनधीतपूर्वम्॥1॥**

कवि के उपर्युक्त निरूपण में भारतवर्ष की चिन्तनधारा की आस्था-श्रद्धामयी दैवी पृष्ठभूमि की अभिव्यक्ति हुई है। भारतीय लोक का बहुत बड़ा भाग इस ईश्वर कृपा का अनुभव करता है। उसकी विराट्सत्ता पर विश्वास करता है। युग की किसी इकाई की आस्थालु प्रवृत्ति यहाँ उभर कर सामने आती है। युग को यह सन्देश भी कवि यहाँ देता है कि युग को भगवत्कृपा पर विश्वास करना चाहिए। महापुरुष विना परमेश्वरानुकम्पा के पैदा नहीं होते।

स्वप्न में आकर भगवती सरस्वती स्वयं आचार्य बलदेव उपाध्याय को हिन्दी माध्यम से संस्कृत ग्रन्थों की समीक्षा का आदेश देती है। कवि इस बात को कितने स्फुट पदों में स्पष्ट करता है। यथा -

**तं तदा विपुलवाष्पकश्मलं बालमाशुतमसाऽऽकुलीकृतम्।**
**प्रायसानुगतिवत्सला स्वयं स्वप्नदर्शनपथेन शारदा॥**
**कोटिचन्द्रकिरणावदातया मन्दहासमधुरश्रियान्विता।**
**बालकेन ददृशे चकासती दुग्धसिन्धुधवला सरस्वती॥**

वत मा व्रज शुच मुधाऽधुना बुद्धिमाकलय सार्वदेशिकीम्
सेवसे यदि न विश्वभारतीं भारतोदयकथाऽपि ते वृथा॥
तैरनूद्य निजभाषया स्वयं पुस्तकानि विविधानि सर्वशः।
भारताध्ययनसारसङ्ग्रहः सङ्कलय्य किमु नात्मसात्कृतः॥
सूक्तिसम्पदममुत्रसम्भवां पुत्र धारयसदर्थसाधिकाम्।
विश्ववाङ्मयसमादरं विना वैदुषी न भुवि शोभतेऽधुना॥
यावदध्ययनकालमाश्रितः सञ्चिनुष्व निखिलानुशासनम्।
तत्परं स्वजनदेशभाषयाऽभीप्सितं लिख समीक्ष्य सञ्चितम्॥2॥

साम्प्रतिक युग की जो माँग है वही बात भगवती सरस्वती बलदेव उपाध्याय से कहती हैं। सरस्वती एवं बलदेव के बीच यह वार्तासंरम्भ उपस्थापित कर कवि श्रीनिवासरथ अपने युगबोध का ही एक जीवन्त परिचय देते हैं। युग की आवश्यकता एवं अपेक्षा का उस संस्कृताराधक कवि को पता है। बलदेव उपाध्याय को कैसे एक दैवी अनुशासन से कवि तत्क्रिया में प्रवृत्त करता है। रचनाकार को यदि युगबोध न होता तो वह इस सन्दर्भ का काव्य में अभिनिवेश ही नहीं करता। लेकिन वह चाहता है कि जन जन तक संस्कृतभाषावाङ्मय पहुँचे। आंग्ल भाषानुवाद से भी कार्य सम्भव नहीं है इसलिए वह हिन्दी भाषा में संस्कृत वाङ्मय की समीक्षा का आवाहन करता है।

इस बात को कहने की काव्ययात्रा में देश की दुर्दशा एवं कर्जन के अत्याचार का तत्कालीन परिदृश्य कवि अभिव्यक्त करता है। यथा-

निजतस्करनीतिमायया विनियन्तुं वत भारतीयताम्।
जनजीवनभेदभूमिका चतुरस्त्रैः प्रहितः प्रशासकः॥
दुरितानुरतः कदर्जनः सितरक्षा कुलशाखिकण्टकः।
सयुत्य शशास भारतं जननीत्यैव स कर्जनासुरः॥
अधरं दशनैर्निपीडयन् निपुणं देशविदारणोद्यतः।
अकरोदचिरेण कर्जनः कदनं वङ्गधराविभाजनम्॥
अथ भारतभूर्विरूपिता विहताशा दयनीयदर्शना।
जनमानसवैशमातुरा कुटिलाऽऽघातकलङ्किताऽभवत्॥
जननीं पिशिताशघर्षितां पृथुचीत्कारविदीर्णदिङ्मुखीम्।
परितः परिदेवनारवैस्तुमुलोत्तप्तमिवाभवज्जगत्॥
शतशोऽनुदिनं निपातितान् रुधिरार्द्राभिन्दधती सुतान्भृशम्।
धरणी न शशाक कीलितुं हृदयं साथ रुरोद दारुणम्॥3॥

तत्कालीन परतन्त्र भारत की दशा का जीवन्त चित्र कवि यहाँ लार्ड कर्जन के अत्याचार के आलोक में अभिव्यक्त करता है। जिसे देखकर किसी भी भारतीय को यह बोध अवश्य ही होने लगता है कि फिर कभी अपने देश को गुलाम न होने देने की भावना से निर्मल राष्ट्रीयभाव से ही प्रवृत्ति आवश्यक है।

काशी में अध्ययन करते हुए बालक बलदेव उपाध्याय अपने एकमित्र को बचाने के लिए गंगा में तब कूद पड़ते हैं जब वर्षा ऋतु में गंगा में बाढ़ आयी हुई थी, तथा थोड़ी ही देर में वे उसे लेकर बाहर निकल आते हैं। यथा-

**हा हाऽर्भक रक्षत रक्षतेति घोरं जनाक्रन्दविरावघोषम्।**
**उत्सृभृज्य पश्चाद्‌बलदेव आराद् हठात्तटाद्‌विद्युदिवोत्पपात।**
**निरुद्धनिःश्वासतया न यावन्मित्राणि वाऽन्येऽपि जनाः प्लवन्ते।**
**शब्देषु तावद्‌व्रसनेषु बालं मज्जन्तमादाय स उन्ममज्ज।।4।।**

आचार्य बलदेव के जीवन की इस शौर्यमयी सत्यगाथा का प्रकाशन कर कवि आज के युग के मित्रवर्ग लोकवर्ग को मैत्री का सन्देश देना चाहता है। क्योंकि ''रामादिवत् वर्तितव्यम् न रावणादिवत्'' भारतीय संस्कृत कविता का उद्‌देश्य रहा है।

इस प्रकार 'बलदेवचरितम्' महाकाव्य के अब तक प्राप्त पाँच सर्गों को पढ़ने से उसके रचनाकार प्रो. श्रीनिवासरथ का युग बोधस्वर बलात् सहृदय सामाजिक को सुनाई देता है। जो एक जागरूक कवि का सबसे बड़ा गुण होता है।

**सन्दर्भटिप्पण्यः**

1. बलदेवचरितम् 1-66,6768
2. बलदेवचरितम् 3-22, 25, 45, 47, 48 ,49
3. बलदेवचरितम् 2-33, 34, 37, 38, 39, 40
4. बलदेवचरितम् 5-67, 68

***सन्दर्भ-ग्रन्थ 'बलदेवचरितम्' स्वयं कवि श्रीनिवासरथ के द्वारा प्राप्त टङ्कित प्रतिकृति***

**डॉ. जर्नादन प्रसाद पाण्डेय 'मणि'**
***सह-आचार्य, साहित्यविभाग, राष्ट्रिय संस्कृत संस्थान,***
***गङ्गानाथ झा परिसर, इलाहाबाद***



# Microcosmic Concept of Man in Sanskrit Literature

**Shalini Shukla**

*We live on one of the most unique planet earth. Due to commercialization, industrialization and urbanization, it is changing rapidly not only from outer parts but inner part human being is changing. These changes influenced and modified many social values and traditions. Several notable changes are observed in family system. Due to absence of social security, net crimes within families and in the whole society are fast increasing. We are not only forgetting our value system but also ourselves. Are we not part of the cosmos? If we are a drop of fathomless ocean or divine being, why devil in us haunting the whole society? The answer lies itself in the question. We have to wipe out the dust of time and forgetfulness form our ancient Sanskrit literature. Although it is generally understood that 'Vedas' depict the panorama of primitive stages. But if we will go beyond prejudiced feeling it will be clear that in every realm of life 'Vedas' contribution is marvelous. In the whole ancient Sanskrit literature there are many gems of knowledge scattered unnoticed. This paper is a humble starting for unfolding the quest for man's own existence.*

Man has undoubtedly discovered many new facts of nature. Many worldly things are making our life easy and comfortable. These comforts have soon become necessicities. Actually we live more for body than for soul. A story in *'Chāndogya Upniṣada'* is worth to read, *'Virochana'* and *'Indra'* went to *'Prajapati'* to know about self and *'Brahma'*. He asked them to dress themselves perfectly and see them in the mirror. They saw that they were looking good. *'Prajapati'* said that their reflection in mirror was *'Brahma'*. *'Virochana'* was satisfied but *Indra* came later dissatisfied and *Prajapati* taught him about *'Brahma'*. But question is what appears to our senses, our immoral body is true or truth is otherwise. These questions must have haunted our an sisters. In the *'Nāsadiya-Sukta'*[1]of *'Ṛgveda'* the quest for birth is well expressed.

1. "Then was not non-existent nor existent: there was no realm of air, no sky beyond it. What covered in, and where? And what gave shelter? Was water there, unfathomed depth of water?

2. Death was not then, nor was there any mortal: No sign was there, the day's and night's divider.

3. Darkness there was: at first concealed in darkness this All was indiscriminated chaos. All that existed then was void and formless: by the great power of Warmth was born the Unit.

4. Thereafter rose Desire in the beginning, Desire, the primal seed and germ of Spirit. Sages who searched with their heart's thought discovered the existent's kinship in the non-existent.

5. Transversely was their severing line extended: what was above it then, and what below it? There were begetters, there were mighty forces, free action here and energy up yonder.

6. Who verily knows and who can here declare it, whence it was born and whence comes this creation? The Gods are later than this world's production. Who knows then whence it first came into being?

7. He, the first origin of this creation, whether he formed it all or did not form it,

Whose eye controls this world in highest heaven, he verily knows it, or perhaps he knows not."

A cosmic origion of man is described in *'Atharvaveda'*[2]. Here heaven is said to be place of noble soul -

"In heaven, where our righteous friends are blessed.
Having cast off discuses from their bodies.
From lameness free and not deformed in members.
There may we see our parents and our children."

In *'Upniṣads'* the cause of birth of man is deeply discussed. Man's relation with cosmos is a matter of debate in *upnishads*. In *'Taittrīyopaniṣad's' 'Bhragu Vallī'*[3] *'Bhregu'* approached his father and said-

"-O sir, please speak to me about – *'Brahma'*. He (the father) said to him (the son) that matter, life, the eyes, the ears, the speech, the mind, all these are manifestations of *'Brahma'*. He (also) said, from which all these beings are born, and by which they live, and in which they merge in the end."

In most of vedic texts, man is considered a part of divine being and there is no difference between man and divine being. But those who go by this verdict that man is nothing but a beast, fail to realize the vedic view of man. No beast is conscious of its being as man is and was. In Vedas divine force is not only controlling from outside but a vitalizing force within. There are countless instances of origion of cosmos in *'Veda'* few are given here, *'Purus Sukta'*[4] of *'Ṛgveda'* gives a cosmic origion of man *'Hiranyagarbha sukta'*[5] of Ṛgveda reveals cosmic force and creator of the universe.

1. A Thousand heads hath Purusa, a thousand eyes, a thousand feet. On every side pervading earth he fills a space ten fingers wide.

2. So mighty is his greatness; yea, greater than his is Purusa.

All creatures are one-fourth of him, three-fourths eternal life in heaven.

*'Hiranya garbha'* sukta of Ṛgveda' reveals cosmic force and creator of the universe.

1. In the beginning rose Hiranyagarbha, born Only Lord of all created beings.

He fixed and holdeth up this earth and heaven. What God shall we adore with our oblation?

2. By him the heavens are strong and earth is steadfast, by him light's realm and sky-vault are supported:

By him the regions in mid-air were measured. What God shall we adore with our oblation?

3. What time the mighty waters came, containing the universal germ, producing Agni,

Thence sprang the Gods' one producing being. What God shall we adore with our oblation?

In *'Bhagwatgita'* cosmic form of *'Krishna'* revealed when *'Arjun'* insisted to see it. Man is nothing but one of multifarious divine forms of *'Krishna'*. *'Krishna'* says –

"Behold[6] the twelve *'Adityas'*, the eight *'vasus'*, the eleven *'Rudras'*, the twin-born *'Aświnikumaras'*, the *'Maruts'* and see also the many more wonderful forms of Mine, never see by you before, objects and anything else you wish to see, all in me."

"But as it would not possible for you to see me with your mortal eyes, I bestow upto you the celestial vision with which you can see my divine form and my power of yoga."

Man's vision are limited we can't see or explain divine powers. But *'Arjun'* saw it through celestial vision. And in most of the *'upniṣadas'* there is no difference between micro-cosmic and macro cosmic; the human being and divine. Man is just a drop of 'Wide Ocean' but due to ignorance he does not realizes his own real stature. The teachings of *'Krishna'* are more understandable because he is both man and God. He combines physical and metaphysical powers. Life is always changing nothing is permanent. "The cosmic[7] process is generally represented by a rotating wheel. It is ever moving, thanks to the greatness of God. It is the moving image of eternity."

Most of The ancient Sanskrit literature grant the utmost autonomy to the human being. The person is said to be nearest to God and if he has a capacity to realize his own self he can become God also. In the book 'Indian Myth and Legend' praises of *'Soma'* are worth to read[8] –

"This soma is a god; he cures
.....men feel God Within their veins"

If we analyze the successive stages of society and lay down the conditions for the coming of spiritual age we will find a gradual change in human behaviour. How long we will cover the dawn with clouds of doubt? The relation of man with it's body is nothing but an illusion which is realized only in final enlightnment. In the field of cosmogony *'śankhya'* has made contributions of far reaching importance. The process of evolution is from simple to complex. *'Sankhya Darshan'* explains the emergence of the cosmic order as possessor of infinited powers.

Is there any solution for the aggrieved human being as Buddhist say "The world is full of misery." or quoted in *'Sankhya Darshan'* solution for three types of sorrow. The answer is yes, there is a cure. The cure is ultimate reality, absolute or *'Moksha'*. According

to *'Nyaya Darshan'* *'moksha'* is attained by the knowledge of the sixteen categories – *'Pramana, Prameya'* etc.

According to *'Vaisheshik Darshan'* *'moksha'* is attained by the real knowledge of six categories *Dravya, Guna* etc. In *'Śwetaśwatropaniṣad'*[9] the realization of man is well depicted that when he realizes his own self then his all sorrows are gone-

"The self, the individual being deeply involved in this tree (The body) grieves with swooning heart. When he realizes his own self as included within the glory of God. Who is worshipped by all, then only are his sorrows gone. (He goes beyond all sorrow)"

In *'Chandogeya Upaniṣad'* *'Aruni'* explains the real self to *'Svetketu'*. *'Tatwamasi'* is a famous saying in this direction. The concept of *'Moksha'* is very wide and needs a critical analysis. The supreme being has given man a freedom of will to return to the *'Brahma'*. He created the illusion of two just to realize one. Life is like a colourful texture, he has made the net of ignorance because one day man will tear the texture and will make himself free.

Actions desires and illusions are attached to the objects of earthly existence. They draw us back to earth and take us towards rebirth. Most of our actions are due to ignorance. Ignorance may seem to us something positive but with true knowledge it appears suffocative and with complete enlightenment it vanishes. The tragedy of modern man is that on lack of inherent information and absence of control over mind and body (which can be removed by inner and outer discipline), human being is often becomes slave of desires. We are lucky enough to have vast *'Sanskrit'* literature for our resqueand guidance. The true knowledge of self can give us contentment. The supernatural powers, the gods and saints all are blessed with impartial, critical knowledge of self. Realization of our true self can give us complete possession of ourselves, takes us permanently to greater cosmos and support us attaining 'Absolute Freedom'.

**References**

1. The Hymns of the Ṛgveda by R.T.H. Griffits page no – 633-634 (Rv. 10. 129)
2. Atharva-veda vi, 120-A history of Sanskrit literature page 199.
3. Upaniṣadas for all by Chitrita Devi- page no. -274
4. The Hymns of he Ṛgveda by R.T.H. Griftith page no – 602-03 Rv. 10.90.1,3,5
5. Same page no. 628-29 Rv. 10.121.1.2.3
6. The Bhagwatgita rearranged by N.S. Sebrahmanian page no. 7.
7. The principal upaniṣadas edited by S. Radhakrishnan page no. 743
8. Muir's original Sanskrit texts vol. v page no. 130 as quoted in 'Indian myth and legend ' by Donald A. Mackezino page no.3
9. Upniṣadas for all by Chitrita Devi page no 105.

**Dr. Shalini Shukla**
***Assistant Professor, Dept. of Sanskrit,***
***Govt. P.G. College Kotdwara, Uttarakhand***



# कौटुम्बिककल्याणाय वास्तुविचारः

शैलजा पाण्डेय

*सम्पूर्णस्य कुटुम्बस्य सुख-समृद्धि-वृद्धिभ्यः वास्तुशास्त्रस्य महत्त्वपूर्णं स्थानं भवति। षट् सांसारिकाणि सुखानि-'अर्थागमो नित्यमरोगिता च प्रिया च भार्या प्रियवादिनी च वश्यश्च पुत्रोऽर्थकरी च विद्या' इति संस्कृतवाङ्मये सुखसाधन- रूपेणोक्तानि। एतेषां प्राप्तये रक्षणार्थं च वास्तुशास्त्रस्यापि परामर्शाः महत्त्वभाजो भवन्ति। तत्र मुख्यद्वारस्य स्थितिः, तदलङ्करणम्, द्वारवेधः, प्रवेशः, निर्गमद्वाराणां बाहुल्यम्, ब्रह्मस्थानविचारः, भूमिः, गृहदिशायामौन्नत्यम्, गृहे जलव्यवस्थायाः स्थानं दिशा च, सुखमयदाम्पत्यजीवनाय शयनकक्षः, सन्ततीनां कृते कक्षव्यवस्था, अध्ययनकक्षः, गृहे मातापित्रोः कक्षव्यवस्था इत्यादयो विषयाः विचार्यन्ते। परिवारसदस्यानामनुकूलव्यवस्था समुचितगृहनिर्माणं तदलङ्करणं च कुटुम्बस्य कल्याणाय कल्पते।*

परिवारसंस्थायाः आधारशिला सुखदगृहस्थजीवनोपरि न्यस्ता वर्तते। भारतवर्षे कुटुम्बपदेन दम्पतिः, तयोः सन्ततिः इत्येव परिगणिताः न भवन्ति, अपितु अस्मिन् वृद्धपितरौ, अविवाहिताः भ्रातरः भगिन्यश्च, सन्ततिः, तेषां वयस्के जाते पुत्रैः सह पुत्रवध्वः, पौत्रादयोऽपि समायान्ति। इत्थं कस्यापि कौटुम्बिकजीवनस्य सुखं परिवारस्य समग्रसदस्यानां सौख्येन प्रसादेन च सम्बद्धं भवति। कुटुम्बे सुखशान्तिप्रसादनार्थं वास्तुशास्त्रे विविधाः नियमाः प्राप्यन्ते।

किं नाम सुखमिति जगतः शाश्वतप्रश्नोऽस्ति। विविधाः दार्शनिकाः विचारकाश्च पृथक्-पृथग्दृशा स्वमतानि स्थापितवन्तः। भौतिकदृशा गृहस्थजीवनस्य सुखमेतेषु षट्तत्त्वेषु निहितं विद्यते-सततं धनागमः, आरोग्यं, मनोनुकूला पत्नी (जीवनसहचरो वा) तस्याः प्रियवादिता, आज्ञाकारिणः पुत्राः, धनार्जनकारिणी विद्या च। उक्तं च-

> **अर्थागमो नित्यमरोगिता च।**
> **प्रिया च भार्या प्रियवादिनी च।**
> **वश्यश्च पुत्रोऽर्थकरी च विद्या**
> **षड् जीवलोकस्य सुखानि राजन्॥**

**अर्थागमः**

**शीलसदाचारौ** - सुखदगृहस्थजीवनस्य मेरूदण्डः यथावश्यकं धनागमो भवति। तदेव धनार्जनं गृहस्थाय सुखकरं भवति, अभ्युन्नतिं प्रददाति यस्योपार्जनं सदाचारेण भवति। महाभारतस्य (शान्तिपर्व, 124/20-60) आख्यानानुसारं लक्ष्मीप्राप्तिः शीलेन सदाचारेण च भवति। कथा एवं वर्तते - एकदा प्रह्लादः स्वशीलप्रभावात् स्वर्गलोकस्याधिपत्यं प्राप्तवान्। इन्द्रः पदच्युतः सञ्जातः। पुनः स्वर्गस्य राज्यप्राप्त्यर्थं सः बृहस्पतिशुक्राचार्ययोः परामर्शानुसारेण ब्राह्मणवेषे शिष्यभावेन प्रह्लादस्य सेवां कृतवान्। इन्द्रः वारं वारं प्रह्लादं

पृष्टवान् यत् सः केनोपायेन स्वर्गस्य राज्यमधिगतवान्। पौनःपुन्येन पृष्टः प्रह्लादः तं स्वर्गस्य राज्यप्राप्तिः शीलधर्मादिकैरभवत् इत्युक्तवान्। एकदा प्रह्लादः ब्राह्मणवेषधरस्येन्द्रस्य सेवया प्रसन्नो भूत्वा 'तंवरं' ब्रूहि इत्युक्तवान्। इन्द्रः तस्य शीलमेव याचितवान्। शीलस्य गमनादेव प्रह्लादस्य शरीरतः धर्मसत्यसदाचार-बललक्ष्म्यादयः सर्वे निर्गतवन्तः। क्षुब्धः प्रह्लादः गमनोद्यतां लक्ष्मीं ब्राह्मणस्य विषये पृष्टवान् तथा ब्राह्मणः इन्द्रः आसीत्, इत्यपि ज्ञातवान्। इत्थं शीलरहितः प्रह्लादः स्वर्गराज्यतः भ्रष्टः राज्यलक्ष्मीरहितश्चाभवत् प्रह्लादं प्रति लक्ष्म्याः वचनमेवमासीत्-

**धर्मः सत्यं तथा वृत्तं बलं चैव ह्यहम्।**
**शीलमूला महाप्राज्ञ सदा नास्त्यत्र संशयः॥[1]**

शीलं व्याख्यायन् व्यासः उपदिष्टवान्-मनसा वाचा कर्मणा कस्यापि अनिष्टं न भवेत् अनुग्रहं दान[2], अहितकरं लज्जोत्पादकं कार्यं न कुर्यात्[3], येन कर्मणा सभायां श्लाघा भवेत्[4], तच्छीलं भवति। एवं शीलसदाचारसमन्विते गृहस्थस्य गृहे लक्ष्मीः सदैव निवसति।

**मुखद्वारस्यालङ्करणम्**

भवनं सर्वदा सुखसमृद्धियुतं भवेत्, अस्य कृते प्रवेशद्वारं मङ्गलप्रतीकैः घट-पत्र-नारिकेलादिभिः अलङ्कृतं कुर्यात्। उक्तञ्च बृहत्संहितायाम् -

**मूलद्वारं नान्यैर्द्वारैरमिसंदधीत रूपर्द्धया।**
**घटफलपत्रप्रमदादिभिश्च तन्मङ्गलैश्चिनुयात्॥[5]**

किन्तु गृहस्यान्यद्वाराणां सज्जा तथा न करणीया भवति।

**द्वारवेधस्य बहुद्वारस्य च निषेधः**

भवने प्रवेशद्वाराणि निर्गमनद्वाराणि बहुसंख्यकानि सुष्ठु न भवन्ति। यस्य भवनस्य निर्माणकार्यं नूतनपदार्थैः भवति, द्वारवेधो न भवति, दोषवाराहित्यं भवति तस्मिन् गृहे धन-धान्यं तिष्ठति -

**न दोषो यत्र न वेधादिर्नव यत्राखिलं भवेत्।**
**बहुद्वाराणि नो यत्र स्याद्धान्यसञ्चयः॥[5]**

**आरोग्यम्**

गृहस्थजीवनस्यापरसुखं 'नित्यमरोगिता' इत्युक्तमस्ति। कुटुम्बे सर्वे प्राणिनः शरीरेण मनसा च स्वस्थाः प्रसन्नाश्च भवेयुः। एतदर्थं वास्तुशास्त्रे विविधाः विचाराः प्राप्यन्ते। गृहे आरोग्यार्थं द्वाराणां समीचीनं प्रमाणं, द्वारवेधस्य निराकरणं, ब्रह्मस्थाने (गृहस्य मध्यभागे) स्तम्भादीनां परिहारः विचारणीयं भवति। द्वारस्य स्वयं पिधानमपिधानं वाः मानाधिक्यं, द्वारस्यातिनतत्त्वमेवमन्ये दोषाः रोगकारकाः भवन्ति। यथा उन्मादरोगः स्वयमुद्घाटितेन द्वारेणोक्तम्-

**उन्मादः स्वयमुद्घाटितेऽथ पिहिते स्वयं कुलविनाशः।[7]**

**द्वारवेधः**

प्रवेशद्वारस्य सम्मुखं यदि मार्ग-वृक्ष-कोण-स्तम्भ-कूप-जलमार्गादिकवेधकारणेष्वेकमपि भवेत् तर्हि भवने द्वारवेधदोषो भवति। किन्तु यदि कारणानामुपस्थितिः द्वारोच्छ्रायात् द्विगुणस्थानं विहाय भवेत् तर्हि दोषाः न भवति-

**मार्गतरुकोणस्तम्भकूपभ्रमविद्धमशुभदं द्वारम्।**
**उच्छ्रायाद् द्विगुणमितां त्यक्त्वा भूमिं न दोषाय।[8]**

उपर्युक्तवेधकारणेषु मार्गात् गृहस्वामिनः नाशः, वृक्षात् बालकेषु दोषः, पङ्कात् जलमार्गाद् वा शोकः, जलप्रवाहात् व्ययः, कूपात् अपस्मारः, देववेधात् विनाशः, स्तम्भात् स्त्रीषु दुःशीलता, ब्रह्मवेधात् (प्रतिमादिवेधात्) कुलनाशो भवति-

**रथ्याविद्धं द्वारं नाशाय कुमारदोषदं तरुणा।**
**पङ्कद्वारे शोको व्ययोऽम्बुनिःस्राविणि प्रोक्तः॥**
**कूपेनापस्मारो भवति विनाशश्च देवताविद्धे।**
**स्तम्भेन स्त्रीदोषाः कुलनाशो ब्रह्मणोऽभिमुखे॥[9]**

**ब्रह्मस्थानम्**

गृहस्य मध्यभागः ब्रह्मस्थानं निगद्यते। अत्र स्तम्भादिभागानां निर्माणकार्यं गर्हितं भवति। गृहस्य हृत्स्थानस्वरूपेऽस्मिन् भागे भारयुतानां पदार्थानां निक्षेपः, उच्छिष्टपदार्थानामपवित्रपदार्थानां तत्र स्थापनं गृहस्वामिनं कृते कुटुम्बिजनेभ्यश्चाधिव्याधिकारको भवति। उक्तञ्च बृहत्संहितायाम्-

**सुखमिच्छन् ब्रह्माणं यत्नाद्रक्षेद् गृही गृहान्तःस्थम्**
**उच्छिष्टाद्युपघाताद् गृहपतिरुपतप्यते तस्मिन्॥[10]**

गृहस्य मध्यभागे द्वारस्य निर्माणं द्रव्यान्ननाशकरं कलहशोकप्रदायकं भवति।

विश्वकर्मणा उक्तञ्च-

**गृहमध्ये कृतं द्वारं द्रव्यधान्यविनाशनम्।**
**आवहेत् कनहं शोकं नारीर्वा सम्प्रदूषयेत्॥[11]**

भारद्वाजोऽपि वास्तुमध्यस्थद्वारस्य निषेधं करोति-

**शिरा मर्माणि वंशाश्च नालमध्यं च सर्वशः।**
**विहाय वास्तुमध्यं च द्वाराणि विनिवेशयेत्॥[12]**

**गृहोच्छ्रायविचारः**

गृहाय भूमिचयने गृहनिर्माणकाले च भूमिभवनयोः उच्छ्रितिः नतिश्च विचारणीयं भवति। गृहस्य दक्षिणभागं पश्चिमभागञ्चोन्नतं कारयेत्। पूर्वप्लवमुत्तरप्लवञ्च दक्षिणे पश्चिमे च तुङ्गं भवनं गृहस्वामिनं धनधान्यसमन्वितमभ्युदयशीलञ्च करोति-

**स्यादुन्नतिः पूर्वनते नराणां वास्तौ धनं दक्षिणभागतुङ्गे।**
**क्षयो घनानां विनते प्रतीच्यां उच्चैर्विनाशो ध्रुवमुत्तरेषु॥**

यदि गृहं पूर्वदिशि उत्तरदिशि चोच्छ्रितं भवति, तदा गृहस्वामिनः धनहानिः सुतहानिश्च भवति, दुर्गन्ध युते भवने सुतवधः वक्रे भवने बन्धुबान्धवानां हानिः, भवने स्पष्टदिग्बोधस्याभावे जाते सन्ततिर्न भवति-

**प्रागुत्तरोन्नते धनसुतक्षयः सुतवधश्च दुर्गन्धे।**
**वक्रे बन्धुविनाशो न सन्ति गर्भाश्च दिङ्मूढे॥[13]**

**गृहे जलस्य स्थितिः**

गृहे जलस्य अनुकूला स्थितिरपि कुटुम्बे धनसुतानां वृद्धिं प्रददाति। जलस्थानस्य, प्रतिकूलता विविध कष्टानि उत्पादयति वराहमिहिरस्य मतानुसारमुत्तरदिशि ईशानकोणे च गृहे जलस्थितिः धनसुतवृद्धिकरको भवति, अन्यदिक्षु जलस्थानात् सुतहानिः, अग्निभयं, शत्रुभयं, स्त्रीजनेषु कलहकारिता, तासु दोषाः, निर्धनता च

गृहे जायन्ते-

**प्राच्यादिस्थे सलिले सुतहानिः शिखिभयं रिपुभयं च।**
**स्त्रीकलहः स्त्रीदौष्ट्यं नैस्व्यं वित्तात्मजाविवृद्धिः॥**[14]

**सुखदं दाम्पत्यजीवनम्**

भौतिकजीवनस्य षट्सुखेषु 'प्रिया च भार्या प्रियवादिनी च' उक्तमस्ति। सुखमयजीवनस्य कारकं तत्त्वं मनोनुकूलः सहचरोऽपि भवति। दाम्पत्यजीवनस्य सन्दर्भे वास्तुशास्त्रीयं मतं दर्शनीयं वर्तते-

**कामोपभोगसदनम्**

दाम्पत्यजीवने कामस्य महत्त्वपूर्ण स्थानं वर्तते। पुरुषार्थचतुष्टये परिगणितस्य अस्य पुरुषार्थस्य सन्दर्भे इदमेव पर्याप्तमस्ति यत् गीतायां भगवान् श्रीकृष्णः स्वकीयं परिचयं धर्माविरुद्धकामरूपेण प्रस्तौति। गृहस्वामी स्वकीयं कामगृहं वायव्योत्तरयोः मध्ये कुर्यात् -

**ततः कामोपभोगसदनं वायुकौबेरमध्यतः।**[15]

मुहुर्तचिन्तामणिग्रन्थेऽपि इदं तथ्यं प्राप्यते। कक्षानां स्थिति पूर्वतः क्रमशः एवं प्राप्यते-

**स्नानाग्निपाकशयनास्त्रभुजेश्च धान्य-**
**भाण्डारदैवतगृहाणि पूर्वतः स्युः**
**तन्मध्यस्तु मथनाज्यपुरीषविद्या-**
**भ्यासाख्यरोदनरतौषधसर्वधाम॥**[16]

युवदम्पतीनां कृते यथासम्भवम् अत्रैव व्यवस्था समीचीना भवति।

**शयनकक्षः**

वास्तुशास्त्रे शयनकक्षस्य कामसदनात् पृथग् व्यवस्था प्राप्यते। शयनकक्षः, विशेषतया गृहप्रमुखस्य, दक्षिणे भवेत्-

**याम्यायां शयनं वेश्म**[17]

शयनकक्षे शय्यायाः शिरोभागं पूर्वदिशि दक्षिणदिशि वा कुर्यात्। शयनकाले यदा पूर्वे शिरो भवति तर्हि विद्यालाभो भवति। दक्षिणे सुखसम्पदः, पश्चिमे चिन्ता, उत्तरे च हानिर्मृत्यु भवति। उक्तमाचारमयूखे-

**प्राक्शिरः शयने विद्या दक्षिणे सुखसम्पदः**
**पश्चिमे प्रबला चिन्ता हानिर्मृत्युः तथोत्तरे॥**

**अनुकूला सन्ततिः, तस्य शिक्षा विकासश्च**

दाम्पत्यजीवनस्य सफला परिणतिः अनुकूलसन्ततिप्राप्तिर्भवति। आधुनिकजीवनसरण्यां पाश्चात्यसंस्कृत्याः प्रभावात् स्वपुत्रादीनां रक्षणं कस्यापि कृतेऽसम्भवं वर्तते। अस्मात् दुष्प्रभावात् सन्ततिषु औद्धत्यं, स्वार्थपरता, सङ्कीर्णमनोवृत्तिप्रभृतिदोषाः परिलक्षिताः भवन्ति। यद्यपि सर्वत्र व्याप्तात् सांस्कृतिकप्रदूषणात् पुत्रादिकानां पूर्णरूपेण रक्षणं दुष्करं वर्तते, तथापि कैश्चित् वास्तुगतैरुपायैः तेषां पूर्णतः प्रतिकूलता निराकृता भविष्यति। उपायाः एवं सन्ति-

**बालकक्षः**

गृहे यदि बालानां कृते कक्षव्यवस्था पृथग् भवेत्, तर्हि तेषां कक्षः पूर्वस्यां दिशि भवेत्। तस्याभावे दक्षिणे भवेत्। यदि तेषां कृते पृथक् कक्षव्यवस्था नास्ति, तर्हि तेषां शयनासनव्यवस्था पूर्वे भवेत्। यतो हि,

प्राक्शिरः शयने विद्याप्राप्तिः भवति। पूर्वदिशा बुद्धिप्रदायिनी भवति। पूर्वदिशि सूर्योदयो भवति। उदीयमानः सूर्यः वेदे 'सविता' इति पदेन स्तुतोऽस्ति। गायत्रीमन्त्रे सवितृदेवस्य प्रार्थना बुद्धिप्रेरणाय चेतनायै च कृतास्ति-

**धियो यो नः प्रचोदयात्।**[18]

**बालकक्षस्यान्तःसज्जा**

बालानां कक्षे शान्तिकराणि प्रसादकानि रमणीयानि चित्राणि स्थापनीयानि भवन्ति। यथासम्भवं हिंसापराणि, उद्वेजनीयानि, कामप्रभावयुतानि (चित्रपटतारिकादिकानां चित्राणि) चित्राणि तत्र वर्जयेत् यतो हि चित्रेपु सततं दृष्टिपातेपु तेषां प्रभावो बालानां चित्ते मस्तिष्के च भवति। शान्तचित्राणां दर्शनेन बालानां चित्ते शान्तिः प्रसन्नता च भवति। तद्विपरीतमुद्वेगकरचित्रदर्शनेन बालकेपु आक्रामकता उद्वेजनीयता जायते। विष्णुधर्मोत्तरपुराणस्य तृतीयखण्डे गृहेपु अमाङ्गालिकचित्राणां स्पष्टतया निषेधो वर्तते-

**युद्धश्मशानकरुणामृतदुःखार्तकुत्सितान्।**
**अमङ्गल्यांश्च न लिखेत्कदाचिदपि वेश्मसु।।**[19]

तद्विपरीतं शुभभावयुतानि चित्राणि गृहे माङ्गल्यप्रदानि भवन्ति-

**कलानां प्रवरं चित्रं धर्मकामार्थमोक्षदम्।**
**माङ्गल्यं परमं ह्येतद् गृहे यत्र प्रतिष्ठितम्।।**[20]

बालानां कक्षे देवादीनां चित्राणि स्थापनीयानि भवन्ति। प्रत्यूषकाले देवादीनां दर्शनेन, तान् प्रणम्य दिनचर्यारम्भेन बालानां मनसि दिवसशुभतायाः विश्वासो भविष्यति, तेषां चिन्तनं सकारात्मकं भविष्यति।

**बालकक्षे आसनव्यवस्था**

बालानामध्ययनाय तेषां कक्षे आसनव्यवस्था एतादृशी भवेत्, यथाध्ययनकाले बालस्य मुखं पूर्वे उत्तरे वा भवेत्। आसनस्य पृष्ठभागे भित्तिः, सम्मुखञ्चावकाशो भवेत्। यदि विद्यार्थिनः आभिमुख्यं भित्तिः बाधा वा भवति तर्हि तस्य मानसिकक्षमता सङ्कुचिता भवति।

इत्थं कक्षव्यवस्थाकरणेन बालाः अन्येभ्यः अधिकतरं शान्ताः, संयताः, सुस्थिराः, अध्ययने एकाग्राः, परिणामतया सफलाः भविष्यन्ति।

**वृद्धमातापित्रोः कक्षः**

कस्मिन्नपि कुटुम्बे वृद्धौ पितरौ सघनवृक्षच्छायारूपौ भवतः। शरीरदृशा क्षीणे जाते तयोः जीवनस्यानुभवाः विविधजटिलावसरेषु कौटुम्बिजनानां दिशानिर्देशे समर्थाः भवन्ति। जीवनस्य सान्ध्यवेलायां तयोः यथोचितविश्रामार्थं कक्षव्यवस्थां पूर्वे दक्षिणे नैर्ऋत्यकोणे वा कारयेत्। वृद्धानां स्थानं परिवारे गौरवपूर्णं भवति। दक्षिणदिशा नैर्ऋत्यकोणञ्च गृहे गुरुभारवहनार्थं वास्तुशास्त्रे वर्णितमस्ति, अतः परिवारस्य गुरुजनानां कृते तत्र स्थानप्रदानं समीचीनं भवति।

एवं कुटुम्बे आबालवृद्धाः सर्वे जनाः स्वस्थाः प्रसन्नाः भवन्ति स एव परिवारः सुखी भवति। स्वस्थसुखीपरिवारार्थं वास्तुशास्त्रे एवं मङ्गलविधानं प्राप्यते।

**पूज्यते देवता यत्र यत्रान्वेक्षणमादरात्।**
**रक्ता च जनिका यत्र यत्र सम्मार्जनादिकम्।।**

**यत्र ज्येष्ठकनिष्ठादिव्यवस्था सुप्रतिष्ठिता।**
**भामवीजो संतपति भानवो नैव यत्र च।।**

**दीप्यते कोपको यत्र पालनं यत्र रोगिणाम्।**
**श्रान्तसंवाहना यत्र तत्र स्यात्कमला गृहे।।[21]**

यस्मिन् गृहे देवपूजा भवति, कौटुम्बिकजनेषु परस्परप्रीतिः आदरभावश्च, ज्येष्ठकनिष्ठयोः यथोचितप्रतिष्ठा, रुग्णानामशक्तानाञ्च परिचर्या भवति, श्रान्तजनाः यत्र विश्रान्तिं यान्ति, तस्मिन्नेव गृहे श्रीः श्रयति।

**सन्दर्भटिप्पण्यः**

1. महाभारत, शान्तिपर्व, 124/60
2. तत्रैव, 124/64
3. तत्रैव, 124/65
4. तत्रैव, 124/66
5. बृहत्संहिता, 53/82
6. वास्तुसौख्य, 370
7. बृहत्संहिता, 53/79
8. बृहत्संहिता, 53/76
9. तत्रैव, 53/77, 78
10. तत्रैव, 53/66
11. बृहत्संहिता, 53/77, पादटिप्पणी (प्रका.-मोती लाल बनारसी दास, 1981)
12. तत्रैव, 53/77 पादटिप्पणी
13. तत्रैव, 53/115
14. बृहत्संहिता, 53/119
15. वास्तुसौख्यम्, 284
16. मुहूर्त चिन्तामणि, 12/21
17. वास्तुसौख्यम्-279
18. ऋग्वेद, 3/62/10
19. विष्णुधर्मोत्तर, तृतीय, 3/43/14
20. तत्रैव, तृतीय, 3/43/38
21. वास्तुसौख्यम्, 371-373

**सन्दर्भग्रन्थसूची**


1. ऋग्वेद, वैदिक संशोधन मण्डल, 1897
2. महाभारत, स्वाध्याय मण्डल, पारडी, बलसाद्र, 1979
3. बृहत्संहिता, सम्पा.-एम. रामकृष्ण भट्ट, मोती लाल बनारसी दास, दिल्ली, 1981
4. वास्तु सौख्यम्, गंगानाथ झा केन्द्रीय संस्कृत विद्यापीठ, इलाहाबाद, टेक्स्ट सिरीज 39, 1997
5. मुहूर्तचिन्तामणि।
6. विष्णुधर्मोत्तर पुराण, तृतीयखण्ड, गायकवाड़ ओरियन्टल सिरीज, 130, बड़ौदा, 1958
7. विष्णुधर्मोत्तरपुराणीयं चित्रसूत्रम्, इन्दिरा गाँधी नेशनल सेन्टर फार द आर्ट्स, नई दिल्ली, मोतीलाल बनारसी दास, दिल्ली 2001
8. मुहूर्त चिन्तामणि, चौखम्वा सुरभारती प्रकाशन, वाराणसी, 1990


**डॉ. शैलजा पाण्डेय**
***सहायक आचार्या, राष्ट्रिय संस्कृत संस्थान, गंगानाथ झा परिसर, इलाहाबाद***



# पाणिनीयाष्टाध्यायीव्याख्यानपरम्परायां शब्दामृतस्य स्थानं महत्त्वं च

ललित कुमार त्रिपाठी

*पाणिनिव्याकरणे अष्टाध्यायीपरम्परायां विप्रराजेन्द्रकृतं शब्दामृतं व्याकरणशास्त्रेतिहासग्रन्थेषु प्रायेण अचर्चितमेव प्रतिभाति। शब्दामृतम् इति ग्रन्थः पाणिनीयाष्टाध्याय्याः श्लोकमयं व्याख्यानं प्रस्तौति। अत्र प्रायेण 2600 श्लोकाः सन्ति। ग्रन्थोऽयं यतो हि नव्यव्याकरणस्य प्रसरात् परं विलिखितः अतोऽत्र प्रक्रियाक्रमेण लिखितानां ग्रन्थानां प्रभावोऽपि वर्तते। अस्मिन् शोधपत्रे शब्दामृतग्रन्थस्य स्वरूपं वैशिष्ट्यं च संक्षेपेणोपस्थापितं वर्तते।*

## 1. पाणिनीयव्याकरणपरम्परायामष्टाध्यायी वार्तिकानि महाभाष्यं च

1.1 वेदा भारतीयज्ञानपरम्पराया आधारभूता इति प्राचीनभारतीयविद्वत्सु प्रचलितो विश्वासः।[1] सर्वेषां विद्यास्थानानां बीजरूपं वेदेषु लभ्यत इति प्रायेण भारतीयमनीषिभिः स्वीकृतो वादः। व्याकरणशास्त्रस्यापि प्रवृत्तिः बीजरूपेण वेदषु लभ्यत इति प्रदर्शयन्ति व्याकरणशास्त्रेतिहासविदः।[2] व्याकरणं वेदाङ्गेष्वन्यतमं प्रधानं वेदाङ्गं विद्यते।[3] पाणिनेर्व्याकरणात् प्रागपि नैकानि व्याकरणानि भारते निर्मितानि प्रचलितानि चाभूवन्।[4] स्वयं महर्षिः पाणिनिरपि अष्टाध्याय्यां नैकेषां वैयाकरणानां नामानि उल्लिलेख।[5] पाणिनिपूर्ववर्तिषु व्याकरणेषु नूनमेव काश्चन न्यूनताः स्युः यस्मात् कारणात् पाणिनेर्व्याकरणस्य उदयात् परं प्रायेण पाणिनिप्राग्वर्तीनि व्याकरणानि लुप्तान्येवाभवन्।

1.2 महर्षिः पाणिनिः सत्स्वपि नैकेषु व्याकरणेषु तेभ्यो विलक्षणस्य यादृशस्य व्याकरणस्य रचनायै प्रावर्तत स तत्र तथा साफल्यमधिजगाम यथा तेनापि कदाचित् कल्पितं स्यान्न वेति सन्देहः। नैकवैशिष्ट्यसमन्वितं पाणिनीयं व्याकरणं शनैः शनैः संस्कृतव्याकरणस्य पर्यायतामेवाप्नोत्। अवश्यमेव महर्षिः पाणिनिः स्वस्मात् पूर्ववर्तिनां नैकेषां व्याकरणानां स्वरूपम्, वैशिष्ट्यम्, गाम्भीर्यम्, विस्तरम्, न्यूनता आलोचनाश्च विज्ञाय अष्टाध्यायीं निर्ममे येनास्य व्याकरणं पूर्ववर्तिनां व्याकरणानां वैशिष्ट्यं धारयद्, न्यूनताः परिहरद्, अभिनवं स्वरूपं च दधत् सुमहतीं परम्परामाविश्चकार। पाणिनिपूर्ववर्तिनां व्याकरणानां का आसन् न्यूनता इति विषयः स्यान्नाम विद्वद्भिर्गवेषणीयो विचारणीयश्च तथापि पाणिनेर्व्याकरणस्य किमस्ति वैशिष्ट्यमिति विषयस्तु नाविदितो विदुषाम्।

1.3 लक्ष्यलक्षणात्मकस्य[6] अस्य व्याकरणशास्त्रस्य द्विविधमस्ति कार्यम्- 1. निर्दुष्टस्य लक्षणस्य लाघवेन निर्वचनम् 2. लक्ष्येषु लक्षणस्य निर्दुष्टं प्रवृत्तिः। निर्दुष्टस्य लक्षणस्य लाघवेन निर्वचनार्थं पाणिनीयाष्टाध्याय्याम् अनुबन्धप्रत्याहारसंज्ञापरिभाषाऽधिकारानुवृत्तिप्रभृतय उपायाः समाश्रिताः सन्ति। लक्षणस्य लक्ष्येषु निर्दुष्टं प्रवृत्तये

पूर्वपरनित्यान्तरङ्गोत्सर्गापवादसिद्धासिद्धवत्सिद्धासिद्धव्यवस्था: समाश्रिता: सन्ति। महर्षि: पाणिनिरनुबन्धाश्रयणेन[7] चतुर्दशानां सूत्राणां साहाय्येन प्रत्याहारप्रयोगै:[8] अनेकव्याकरणशास्त्रीयसंज्ञानां[9] परिभाषाणां[10] चोपयोगैर्बहूनामधिकारसूत्राणां[11] सन्निवेशेन अनुवृत्त्युपयोगै:[12] अष्टाध्यायीसूत्ररूपेण निर्दुष्टं लक्षणमकार्षीत्। एवमेव लक्ष्ये लक्षणस्य निर्दोषं प्रवृत्तये क्वचित् पूर्वविप्रतिपेधव्यवस्थां[13] क्वचिद् उत्सर्गापवादव्यवस्थां[14] क्वचित् सिद्धासिद्धवत्व्यवस्थां[15] क्वचिच्च सिद्धासिद्धव्यवस्थां[16] समाश्रयत्। व्याख्यातृभिर्नित्यानित्यव्यवस्था[17] बहिरङ्गान्तरङ्गव्यवस्थापि[18] पाणिन्यभिप्रेतत्वेन समाश्रिता। उक्तासु व्यवस्थासु पूर्वपर-अधिकारानुवृत्ति-सपादसप्ताध्यायी-त्रिपादी- सिद्धासिद्धवद्भावादिविषयेष्वष्टाध्याय्यां सूत्राणां सन्निवेशस्थानमपि महतीं भूमिकामादधाति। एता: सर्वा व्यवस्था मनसि सन्निधाय सूत्राणां रचना, तेषां स्थाननिर्धारणमतीव दुष्करं कार्यं महर्षिणा पाणिनिना विहितं यदवेक्ष्य विश्वस्य श्रेष्ठा बुद्धिजीविनोऽपि आश्चर्यचकिता: सन्त: पाणिनेर्मेधां प्रति तदीयां कृतिं प्रति श्रद्धावनता भवन्ति। साम्प्रतमपि नैक आधुनिकभाषाविज्ञानविदो वैयाकरणा: संगणकविज्ञानविद: संगणकभाषाविज्ञानविशेषज्ञा: पाणिनीयाष्टाध्याय्या: संरचना-कार्यपद्धति-प्राचीनव्याख्यानसमीक्षण-नवव्याख्यानसम्भवानादिविपयेपु नवनवानुसन्धाने रता दृश्यन्ते।[19]

1.4 नेति नेति इति विचाररीत्या ज्ञानधारा न कदापि जडीभवति न वा तत्रैव विरमति। यत्किमपि शास्त्रं, या काचिदपि मानवकृतिरन्वेषणं वा सर्वथा परिपूर्णं न भवति, न वा पुनर्विचारनिरवकाशं भवितुमर्हति। तत्र भवत्येव पुनर्विचारणाया अवसर:। नैकवैशिष्ट्यसमन्वितायां सत्यामपि पाणिनेरष्टाध्याय्यां क्वचित् संशोधनं परिवर्तनं परिवर्धनं वा अनिवार्यमभूत्। कदाचित् तत्र न्यूनाधिक्यभाववशात्[20] कदाचिद् भाषापरिवर्तनवशाद्[21] वा अष्टाध्याय्यामुक्तानुक्तदुरुक्तानां चिन्ताया अवसर: समजायत। अष्टाध्यायीमधिकृत्य महर्षिणा कात्यायनेन यानि वाक्यानि पठितानि तानि वार्तिकरूपेण प्रसिद्धिं गतानि।[22] वार्तिककार: कात्यायन: पाणिनिसूत्रणि यथालक्ष्यं परीक्ष्य यथापेक्षं परिवर्तनं परिवर्धनं संशोधनं वा प्रास्तावीत्।

1.5 पाणिने: कात्यायनाच्च परं महर्षि: पतञ्जलि: पाणिनीयव्याकरणस्य महामान्यो मुनिरजायत येन महाभाष्यं[23] विरचय्य पाणिने: सूत्राणि कात्यायनस्य च वार्तिकानि विस्तरेणाक्षेपसमाधानशैल्या[24] पुनरपि परीक्षितानि व्याख्यातानि च। एवंकरणे क्वचित् कानिचित् सूत्राणि प्रत्याख्यातानि, क्वचित् सूत्रेषु योगविभागव्यवस्था समाश्रिता। महाभाष्यकारेण क्वचित् सूत्राणां छेदपरिवर्तनं विहितम्, क्वचित् सूत्राणां सन्निवेशस्थानस्य परिवर्तनप्रस्तावो विहित:, नैकेपु स्थलेपु वार्तिकानां गतार्थता पाणिनिसूत्रेष्वेव प्रदर्शिता, अपि च नैकानि वार्तिकानि खण्डितानि, क्वचिद् यत्र सूत्रवार्तिकाभ्यामपि न लक्ष्यसिद्धिस्तत्र स्वोपज्ञा इष्टयोऽपि पठिता:।[25] इत्थं च महर्षिणा पतञ्जलिना कात्यायनस्य वार्तिकानां व्याख्यानपरीक्षणपूर्वकम् अष्टाध्यायीपरम्परा पुनरपि निरीक्षिता, परीक्षिता, संशोधनसंवर्धनपरिवर्धनप्रस्तावै: संस्तुता, अव्याप्त्यतिव्याप्तिदोपपरिहारै: परिष्कृता, व्याकरणशास्त्रीयदर्शन-सिद्धान्तैर्गुम्फिता अजस्रं प्रवाहिता च। इत्थं च पाणिनिकात्यायन- पतञ्जलिमहर्षीणामवदानेन पाणिनीयं व्याकरणं नैकविधिना परीक्षितं सुविचारितं पूर्वोत्तरपक्षाभ्यां पुन: पुनरपि विमृष्टं सुदृढं तन्त्रमजायत।[26]

## 2. पाणिनीयाष्टाध्यायीव्याख्यानपरम्परा

2.1 पाणिनीयाष्टाध्याय्यां पाणिनिकालादेव वृत्तिनिर्माणस्य प्रमाणानि लभ्यन्ते। पाणिनिना स्वयमेवाष्टाध्याय्यां वृत्तिर्विरचितेति सप्रमाणं निरूपयन्ति व्याकरणशास्त्रेतिहासविद:।[27] पाणिनेर्वृत्तिमतिरिच्यश्वोभूति-व्याडि-कुणि-माथुर-नववररुचि-देवनन्दी-दुर्विनीत-चुल्लि- निर्लूर-चूर्णि-प्रभृतिभिराचार्यै- र्वृत्तिग्रन्था विलिखिता आसन्निति व्याकरणशास्त्रेतिहासग्रन्थेषु सप्रपञ्चं निरूपितं विद्वद्भि:।[28]

2.2 पाणिनीयाष्टाध्यायीमधिकृत्य महाभाष्यमतिरिच्य सर्वप्राचीना व्याख्या वामनजयादित्य- विरचिता काशिकैव लभ्यते साम्प्रतम्। काशिकाग्रन्थो व्याकरणशास्त्रस्य वृत्तिनामपरायणादिरूपेण विप्रकीर्णस्य तन्त्रस्य

सन्निवेशं कुरुते। वृत्तिरियं पाणिनीयाष्टाध्यायीं सरलया सुबोधया च गिरा विवृणोति। अष्टाध्याय्याः सुगमव्याख्यानेन प्राचीनकालादेवेयं वृत्तिरष्टाध्याय्या अध्ययनार्थं सुप्रथिता आसीत्। काशिकायां महाभाष्यापेक्षयापि सूत्रवार्तिकयोः स्वरूपदृष्ट्या, भेदोऽपि दृश्यते। काशिकायां चान्द्रव्याकरणस्य कातन्त्रव्याकरणस्य च प्रभावो वर्तत इति प्रतिपादयन्ति विद्वांसः। महाभाष्येऽनुक्तानि नैकानि वचनानि काशिकायां लभ्यन्ते। नैके विद्वांस इमानि अप्रमाणत्वेन संगिरन्ते। विशेषेण कैयटहरदत्तभट्टोजिदीक्षितनागेशभट्टप्रभृतयो विद्वांसः काशिकोक्तानां बहूनां वचनानामप्रमाणत्वं प्रतिपादयन्ति। तथापि काशिकाग्रन्थोऽयमष्टाध्याय्या अध्ययनार्थं महदुपकारकमजायत।[29] काशिकामधिकृत्य जिनेन्द्रबुद्धिकृतो न्यासः, हरदत्तविरचिता पदमञ्जरी चातिमहत्त्वभाजौ टीकाग्रन्थौ काशिकाध्ययने अत्यधिकं समुपकारकौ टीकाग्रन्थौ स्तः।

2.3 अष्टाध्याय्या अनुशीलनक्रमे प्रक्रियापक्षस्यापि उपयोगो भवत्येव। पुरा कुशाग्रमतयोऽ- ष्टाध्यायीक्रमेण पाणिनीयाष्टकमधीयानाः सम्पूर्णां प्रक्रियामपि यथासूत्रं साधयन्ति स्म। किं च व्याकरणान्तरे संस्कृतभाषाशिक्षणार्थं प्रकरणक्रमानुरोधेन प्रक्रियानुरोधिनो ग्रन्था विरचिताः। तेषां प्रभावात् पाणिनीयव्याकरणेऽपि अल्पधियां प्रक्रियाक्रमेण व्याकरणं बोधयितुं प्रक्रियाग्रन्थानां निर्माणमारब्धम्। पाणनीयं व्याकरणमधिकृत्य लिखितेषु प्रक्रियाग्रन्थेषु धर्मकीतिना 'रूपावतार'[30] इत्याख्यो ग्रन्थो विलिखितः। श्रीकृष्णलीलांशुकमुनिना 'प्रक्रियारत्नम्'[31] इत्याख्यो ग्रन्थो व्यरचि। प्रक्रियाग्रन्थेषु श्रीरामचन्द्राचार्येण विरचितः प्रक्रियाग्रन्थः 'प्रक्रियाकौमुदी'[32] इति सर्वानपि पूर्ववर्तिप्रक्रियाग्रन्थानतिशेते। यद्यपि ग्रन्थेऽस्मिन् पाणिनेरष्टाध्याय्याः सर्वाणि सूत्राणि नैव व्याख्यातानि तथापीयं प्रक्रियाकौमुदी पाणिनीयप्रक्रियाग्रन्थेषु महतीं प्रसिद्धिमियाय। ग्रन्थेऽस्मिन् महाभाष्यकाशिकाग्रन्थैः साकमेव रूपावताररूपमालामुग्धबोधादिव्याकरणग्रन्था अपि पर्यालोचिता दृश्यन्ते। प्रक्रियाकौमुदीमाश्रित्य नैके महत्त्वभाजो टीकाग्रन्था अपि विरचिताः।[33]

2.4 प्रक्रियाकौमुद्याः परं पाणिनीयं व्याकरणमाश्रित्य श्रीमता भट्टोजिदीक्षितेन वैयाकरणसिद्धान्तकौमुदी इत्याख्यो ग्रन्थः प्रणीतः।[34] पूर्ववर्तिषु पाणिनीयप्रक्रियाग्रन्थेषु सम्पूर्णानां पाणिनीयसूत्राणां समावेशो नासीत्। भट्टोजिदीक्षितेन विरचितायां वैयाकरणसिद्धान्तकौमुद्यां सर्वेषां पाणिनीयसूत्रणां समावेशः कृतो दृश्यते। समस्तेऽपि भारते पाणिनीयव्याकरणस्य प्रमुखग्रन्थेषु वैयाकरणसिद्धान्तकौमुदी प्रथिता। वैयाकरणसिद्धान्तकौमुदीमाश्रित्य नैके टीकाग्रन्थाः प्रणीताः।[35] तेषु भट्टोजिदीक्षितेनैव विरचितो व्याख्याग्रन्थः प्रौढमनोरमा, ज्ञानेन्द्रसरस्वतीमहाशयेन लिखिता तत्त्वबोधिनी, रामकृष्णभट्टेन कृतः सिद्धान्तरत्नाकरः, श्रीनागेशभट्टेन विरचितौ बृहच्छब्देन्दुशेखरः लघुशब्देन्दुशेखरश्चेति ग्रन्थौ, वासुदेववाजपेयिविरचिता बालमनोरमा, अन्ये चानेके वैयाकरणसिद्धान्त-कौमुदीव्याख्याग्रन्था अत्यधिकं प्रसिद्धिं गताः।

### 3. पाणिनीयाष्टाध्यायीव्याख्यानपरम्परायां विप्रराजेन्द्रविरचितं शब्दामृतम्

3.1 पाणिनीयाष्टाध्याय्या वैशिष्ट्यं तस्य लक्ष्यलक्षणात्मकस्वरूपस्य निर्दुष्टतया सम्पादनेन वर्तते। अष्टाध्याय्यां यानि लक्षणानि अर्थात् सूत्राणि तेषां विस्तरेण व्याख्यानं महाभाष्ये कृतम् किं च तत्र नैकेषां पक्षाणामुपस्थापनात् नैकेषां शङ्कासमाधानानामुपस्थापनाद् लाघवेनेदमित्थमितिरूपेण सूत्रव्याख्यानं ज्ञातुमल्पधियां क्लेशः स्यात्। तद्दृष्ट्या वामनजयादित्याभ्यां काशिका वृत्तिर्महते समुपकाराय कल्पते। किं च सापि नैकत्र व्याकरणान्तरप्रभावाद् महाभाष्यानभिप्रेतानपि सूत्रार्थान् व्याचष्टे क्वचिच्च महाभाष्यसिद्धान्तविरुद्धमपि व्याचष्ट इति प्रतिपादयन्ति महाभाष्ये कृतभूरिश्रमा महान्तो वैयाकरणाः। अतो महाभाष्यं परमं प्रमाणं स्वीकुर्वताम् अत्र कदाचिद् विप्रतिपत्तेरस्त्यवसरः। प्रक्रियाक्रमेण पाणिनीयसूत्रार्थानां पुनः पुनरपि परिष्कारेण महाभाष्यस्य परमं प्रामाण्यं स्वीकुर्वद्भिः भट्टोजिदीक्षित-नागेशभट्टप्रभृतिभिर्विद्वद्भिः पाणिनीयसूत्राणामर्थविमर्शः सम्यक् परीक्ष्य निष्कर्षरूपेण प्रस्तुतस्तथापि प्रक्रियाक्रमेण लिखितेषु वैयाकरणसिद्धान्तकौमुदी-प्रौढमनोरमा-शब्दरत्न-

लघुशब्देन्दुशेखर-बृहच्छब्देन्दुशेखरादिग्रन्थेषु पाणिनीयाष्टकक्रमस्याभावात् पाणिनीयाष्टाध्याय्याः सूत्रसन्निवेशक्रमस्य यद् वैशिष्ट्यं तदभावाच्च पाणिनीयसूत्रार्थविमर्शस्य तथा लाभोऽध्येतृभिः प्राप्तुमशक्य एव। अत एव महती खलु अपेक्षा आसीत् तादृशस्यैकस्य ग्रन्थरत्नस्य यः पाणिनीयाष्टाध्याय्याः क्रमवैशिष्ट्यमनुपालयन् पाणिनीयव्याकरणव्याख्यानपरम्परायां सर्वविधं वैशिष्ट्यं क्रोडीकृत्य पाणिनीयामष्टाध्याय्याः पुनरपि व्याख्यानं प्रस्तुयात्। महदेतत् कार्यं सम्पादितं महावैयाकरणेन विदुषा विप्रराजेन्द्रेण अष्टाध्याय्यां 'शब्दामृतम्' इति श्लोकमयीं व्याख्यां विरचय्य। व्याख्याग्रन्थोऽयं पाणिनीयाष्टाध्याय्या व्याख्यानपरम्परायामत्यधिकं महत्त्वं दधाति।

## 4. शब्दामृतस्य स्वरूपम्

### 4.1 श्लोकमयं व्याख्यानम्

व्याख्येयं श्लोकमयी वर्तते। पाणिनीयाष्टाध्यायीसूत्राणि धातुपाठं गणपाठं लिङ्गानुशासनं उणादिसूत्राणि व्याकरणदर्शनसिद्धान्तांश्चाश्रित्य शब्दामृते प्रायेण 2600 श्लोका लभ्यन्ते। श्लोकसंख्याविषये ग्रन्थस्यान्ते ग्रन्थकारः स्वयमेव लिखति – 'द्विसहस्रैस्तथाधिक्यैश्श्लोकैरेभिरनुत्तमम्।'[36] अयं ख-लीथो पाठो वर्तते। यद्यपि अस्य ग्रन्थस्य क-लीथोमध्ये श्लोकानां संख्याविषये ग्रन्थान्ते एवं पाठो लभ्यते – 'त्रिसहस्रैस्तथाधिक्यैश्श्लोकैरेभिरनुत्तमम्' इति।[37] किं च क-लीथोपाठः त्रुटिग्रस्तो वर्तत इति शब्दामृतस्य सम्पूर्णानां श्लोकानां गणनया ज्ञायते। शब्दामृते प्रतिपादं श्लोकसंख्या प्रायेण एवं वर्तते-

| | | |
|---|---|---|
| प्रथमाध्याये प्रथमपादे | 254 | श्लोकाः |
| प्रथमाध्याये द्वितीयपादे | 101 | श्लोकाः |
| प्रथमाध्याये तृतीयपादे | 252 | श्लोकाः |
| प्रथमाध्याये चतुर्थपादे | 80 | श्लोकाः |
| द्वितीयाध्याये प्रथमपादे | 72 | श्लोकाः |
| द्वितीयाध्याये द्वितीयपादे | 37 | श्लोकाः |
| द्वितीयाध्याये तृतीयपादे | 39 | श्लोकाः |
| द्वितीयाध्याये चतुर्थपादे | 65 | श्लोकाः |
| तृतीयाध्याये प्रथमपादे | 207 | श्लोकाः |
| तृतीयाध्याये द्वितीयपादे | 80 | श्लोकाः |
| तृतीयाध्याये तृतीयपादे | 191 | श्लोकाः |
| तृतीयाध्याये चतुर्थपादे | 48 | श्लोकाः |
| चतुर्थाध्याये प्रथमपादे | 170 | श्लोकाः |
| चतुर्थाध्याये द्वितीयपादे | 39 | श्लोकाः |
| चतुर्थाध्याये तृतीयपादे | 39 | श्लोकाः |
| चतुर्थाध्याये चतुर्थपादे | 31 | श्लोकाः |
| पञ्चमाध्याये प्रथमपादे | 57 | श्लोकाः |
| पञ्चमाध्याये द्वितीयपादे | 50 | श्लोकाः |
| पञ्चमाध्याये तृतीयपादे | 46 | श्लोकाः |

| | | |
|---|---|---|
| पञ्चमाध्याये चतुर्थपादे | 50 | श्लोकाः |
| षष्ठाध्याये प्रथमपादे | 129 | श्लोकाः ख-132 |
| षष्ठाध्याये द्वितीयपादे | 79 | श्लोकाः |
| षष्ठाध्याये तृतीयपादे | 69 | श्लोकाः |
| षष्ठाध्याये चतुर्थपादे | 69 | श्लोकाः ख- 72 |
| सप्तमाध्याये प्रथमपादे | 54 | श्लोकाः ख- 52 |
| सप्तमाध्याये द्वितीयपादे | 84 | श्लोकाः ख- 85 |
| सप्तमाध्याये तृतीयपादे | 68 | श्लोकाः |
| सप्तमाध्याये चतुर्थपादे | 28 | श्लोकाः |
| अष्टमाध्याये प्रथमपादे | 37 | श्लोकाः |
| अष्टमाध्याये द्वितीयपादे | 59 | श्लोकाः |
| अष्टमाध्याये तृतीयपादे | 72 | श्लोकाः |
| अष्टमाध्याये चतुर्थपादे | 55 | श्लोकाः |

## 4.2 शब्दामृते छन्दःप्रयोगाः[38]

शब्दामृते प्रायेण अनुष्टुप्छन्दसः प्रयोगः कृतः। किं च क्वचित् अन्येषामपि छन्दसां तद्यथा उपजाति-वंशस्थ-भुजङ्गप्रयातप्रभृतिछन्दसां प्रयोगो लभ्यते।

### 4.2.1 शब्दामृते उपजातिछन्दस उदाहरणम् -

न तद्धितादेः प्रकृतिस्तिङन्ता
न धातुरूपा तु भवेत् प्रमाणात्।
सार्वो भवन्नैव दुरूहकल्पन
उच्छादितः पाठबलाद्धि भाष्यात्।।[39.1]
शुचेति शोके कुच शब्दतारे
कौटिल्यमल्पत्वमतिं विधत्ते।
व्रुञ्चेति क्रुञ्चेति नलोपिनौ वै
मुञ्चापनाये गतिपूजनेऽञ्चुः।।[39.2]

### 4.1.2 शब्दामृते वंशस्थछन्दस उदाहरणम्

अथात्र वर्गेष्वनुनासिकान्तका
दिगाख्यया तत्र कृतामुदात्तकाः।
घिणिर्घुणिश्चापि घृणिर्ग्रहे किल
घुणेति घूणेति च घूर्णने मतौ।।[40]

### 4.1.3 शब्दामृते भुजङ्गप्रयातछन्दस उदाहरणानि-

कृता योगतः कर्तृकर्माभिधेयाद्
भवत्येव षष्ठी न चेष्टान्यरूपा।

कृतीत्येतदत्राथ नो चेत् प्रवाच्यं
भवेत् तद्धितं दूषणं तच्छृणुष्व।।[41.1]

तमालो विशालो विडालो मृडालं कुलालः कपालं पलालं विभाव्यम्।
पतङ्गस्तरङ्गो लवङ्गं विहङ्गो मृदङ्गः कुरङ्गस्तथात्वेन वेद्यम्।।[41.2]

करेणुर्हरेणुर्हथः कुष्ठनीथौ
रथश्चात्र काष्ठं तथा वा भृञश्च।
प्रवाच्यं तथोष्ठञ्च कोष्ठञ्च गाथा
तथार्थस्तथा शोथसार्थाविहाद्यैः।।[41.3]

जराया जरस्वात्वजादौ विभक्तौ
पदाङ्गाधिकारे तदन्तस्य युक्तम्।
श्रुताया तु तस्याः परन्त्वत्र शास्त्रे
तथैवैकदेशस्य भाष्याद्विमृग्यम्।।[41.4]

इसन्तादुसन्तादुकस्तातुकत्वम्
भवेठ्ठस्य सिद्धन्त्वचस्स्थानिवत्त्वात्।
तथा चौषिकादौ न तच्छब्दवाक्यात्
सुसिद्धन्तथा दौष्क इत्यन्यतो हि।।[41.5]

## 4.2 शब्दामृते व्याकरणस्य विविधानामङ्गानां व्याख्यानम्

शब्दामृते पाणिनीयव्याकरणस्य विविधानामङ्गानां श्लोकमयं व्याख्यानं लभ्यते। तथाहि सूत्रपाठः, धातुपाठः, गणपाठः, लिङ्गानुशासनपाठः, उणादिपाठश्च अत्र श्लोकैर्व्याख्याताः संगृहीता वा सन्ति।[42]

### 4.2.1 श्लोकात्मकः सार्थो धातुपाठः

अष्टाध्यायीसूत्रे समागतानां भ्वाद्यदादिधातुगणानां तस्मिन्नेव सूत्रे पाठः प्रदीयते। तथा च तस्मिन् सूत्रे धातूनामर्थनिर्देशपूर्वकं धातूनां श्लोकमयमुपस्थापनं क्रियते। तत्र 'भ्वादयो धातवः'[43] इति सूत्रे चतुः सप्तत्युत्तरैकशतेन (174) श्लोकैः भ्वादिगणः, 'अदिप्रभृतिभ्यः शपः[44]' इति सूत्रे द्वादशभिः (12) श्लोकैः अदादिगणः, 'जुहोत्यादिभ्यः श्लुः[45]' इति सूत्रे षड्भिः (6) श्लोकैः जुहोत्यादिगणः, 'सत्यापपाश..[46]' इति सूत्रे त्रिंशता (30) श्लोकैः चुरादिगणः, 'कण्डवादिभ्यो यक्'[47] इति सूत्रे सप्तभिः (7) श्लोकैः कण्ड्वादिगणः, 'दिवादिभ्यः श्यन्[48]' इति सूत्रे चतुर्विंशत्या (24) श्लोकैः दिवादिगणः, 'तुदादिभ्यः शः[49]' इति सूत्रे षोडशभिः (16) श्लोकैः तुदादिगणः, 'रुधादिभ्यः श्नम्[50]' इति सूत्रे सप्तभिः (7) श्लोकैः रुधादिगणः, 'तनादिकृञ्भ्यः उः[51]' इति सूत्रे एकेन (1) श्लोकेन तनादिगणः, 'क्र्यादिभ्यः श्ना[52]' इति सूत्रे दशभिः (10) श्लोकैः क्र्यादिगणः, तत्तद्धातूनामर्थनिर्देशपूर्वकमुपस्थापितो वर्तते।

### 4.2.2 गणपाठस्य श्लोकमयः पाठः

तत्तद्गणपठितानां शब्दानां प्रायेण तत्तत्सूत्रेष्वेव श्लोकमयमुपस्थापनं वर्तते यत्रायं गणः पठ्यते। प्रमुखानां गणानां श्लोकशो विवरणमेव वर्तते- 'सर्वादीनि सर्वनामानि[53]' इति सूत्रे त्रिभिः (3) श्लोकैः सर्वादिगणः, 'स्वरादिनिपातमव्ययम्[54]' इति सूत्रे पञ्चविंशत्या (25) श्लोकैः तद्गणस्थशब्दानामर्थनिर्देशपूर्वकं स्वरादिगणः, अष्टाभिः (8) श्लोकैर्निपाताः, 'गाङ्कुटादिभ्योऽञ्णिन्ङित्'[55] इति सूत्रे अष्टाभिः (8) श्लोकैः कुटादिगणः,

द्युद्भ्यो लुङि'[56] इति सूत्रे पञ्चभिः (5) श्लोकैः द्युतादिगणः, 'वृद्भ्यः स्यसनोः'[57] इति सूत्रे द्वाभ्यां (2) श्लोकाभ्यां वृतादिगणः, 'सप्तमी शौण्डैः'[58] इति सूत्रे द्वाभ्यां (2) श्लोकाभ्यां शौण्डादिगणः, 'मयूरव्यंसकादयश्च'[59] इति सूत्रे द्वाभ्यां (2) श्लोकाभ्यां मयूरव्यंसकादिगणः,।

### 4.2.3 लिङ्गानुशासनस्य श्लोकमयं व्याख्यानम्

'अव्ययीभावश्च'[60] इति सूत्रेण अव्ययप्रकरणं समाप्य सम्पूर्णं लिङ्गानुशासनं श्लोकरूपेण सोदाहरणमुपस्थापितं विद्यते। तत्र 'स्त्री'[61] इति लिङ्गानुशासनसूत्रस्य अधिकारे समागतानां सूत्राणां व्याख्यानं षोडशभिः (16) श्लोकैः, 'पुमान्'[62] इति लिङ्गानुशासनसूत्रस्य अधिकारे समागतानां सूत्राणां व्याख्यानं त्रयस्त्रिंशदुत्तरैकशतेन (133) श्लोकैः, 'नपुंसकम्'[63] इति लिङ्गानुशासनसूत्रस्य अधिकारे समागतानां सूत्राणां व्याख्यानं षोडशभिः (16) श्लोकैः, 'स्त्रीपुंसयोः'[64] इति लिङ्गानुशासनसूत्रस्य अधिकारे समागतानां सूत्राणां व्याख्यानं द्वाभ्यां श्लोकाभ्यां, 'पुंन्नपुंसकयोः'[65] इति लिङ्गानुशासनसूत्रस्य अधिकारे समागतानां सूत्राणां व्याख्यानमेकेन श्लोकेन कृतं वर्तते। अत्र लिङ्गानुशासनस्य व्याख्यानं सोदाहरणं कृतं विद्यते।

### 4.2.4 उणादिपाठस्य श्लोकमयं व्याख्यानम्

'उणादयो बहुलम्'[66] इति सूत्रे एव उणादिसूत्राणां पाठोऽपि प्रदत्तो वर्तते। अत्र पञ्चसु पादेषु विभक्तानाम् उणादिसूत्राणाम् एकनवत्युत्तरैकशतेन (191) श्लोकैर्व्याख्यानं विहितं विद्यते।

### 4.2.5 केषाञ्चन सूत्राणां विस्तरेण व्याख्यानम्

शब्दामृते पाणिनीयाष्टाध्याय्याः प्रायेण सूत्राणि व्याख्यातानि। बहूनि सूत्राणि विस्तरेणापि व्याख्यातानि सन्ति। विस्तरेण व्याख्यातानि कतिचन सूत्राण्यत्र संगृह्यन्ते। तद्यथा - आदिरन्त्येन सहेता'[67] इति सूत्रं पञ्चदशभिः (15) श्लोकैः, 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्'[68] इति सूत्रं पञ्चभिः (5) श्लोकैः, 'हलन्त्यम्'[69] इति सूत्रं पञ्चभिः (5) श्लोकैः, 'ङिति ह्रस्वश्च'[70] इति सूत्रं त्रिभिः (3) श्लोकैः, 'यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्'[71] इति सूत्रं चतुर्भिः (4) श्लोकैः, 'कर्तुरीप्सिततमं कर्म'[72] इति सूत्रं पञ्चभिः (5) श्लोकैः, 'अकथितं च'[73] इति सूत्रं त्रिभिः (3) श्लोकैः, 'समर्थः पदविधिः'[74] इति सूत्रं चतुर्भिः (4) श्लोकैः, 'अव्ययं विभक्तिसमीप.'[75] इति सूत्रं सप्तभिः (7) श्लोकैः, 'नञ्'[76] इति सूत्रं चतुर्भिः (4) श्लोकैः, 'आतश्चोपसर्गे'[77] इति सूत्रं अष्टाभिः (8) श्लोकैः, 'विधिनिमन्त्रणामन्त्रणाधीष्ट.'[78] इति सूत्रं चतुर्भिः (4) श्लोकैः, 'अजाद्यतष्टाप्'[79] इति सूत्रं चतुर्भिः (4) श्लोकैः, 'वोतो गुणवचनात्'[80] इति सूत्रं सप्तभिः (7) श्लोकैः, 'अषडक्षाशितं .'[81] इति सूत्रं त्रिभिः (3) श्लोकैः, 'हल्ङ्याभ्यो दीर्घात्.'[82] इति सूत्रं त्रिभिः (3) श्लोकैः, 'एङि पररूपम्'[83] इति सूत्रं त्रिभिः (3) श्लोकैः, 'अव्यक्तानुकरणस्यात इतौ'[84] इति सूत्रं पञ्चभिः (5) श्लोकैः, 'अङ्गस्य'[85] इति सूत्रं त्रिभिः (3) श्लोकैः, 'असिद्धवदत्राभात्'[86] इति सूत्रं त्रिभिः (3) श्लोकैः, 'वाह ऊठ्'[87] इति सूत्रं त्रिभिः (3) श्लोकैः, 'एकाच उपदेशेनुदात्तात्'[88] इति सूत्रं त्रयोदशभिः (13) श्लोकैः, 'बहुवचने झल्येत्'[89] इति सूत्रं एकादशभिः (11) श्लोकैः, 'दीर्घो लघोः'[90] इति सूत्रं पञ्चभिः 5 श्लोकैः, 'सपूर्वायाः प्रथमाया विभाषा'[91] इति सूत्रं पञ्चभिः (5) श्लोकैः, 'पूर्वत्रासिद्धम्'[92] इति सूत्रं त्रिभिः (3) श्लोकैः, 'नलोपः सुप्स्वर..'[93] इति सूत्रं त्रिभिः (3) श्लोकैः, 'समः सुटि'[94] इति सूत्रं पञ्चभिः (5) श्लोकैः, 'ओतो गार्ग्यस्य'[95] इति सूत्रं त्रिभिः (3) श्लोकैः, 'अ अ'[96] इति सूत्रं पञ्चभिः (5) श्लोकैः व्याख्यातं वर्तते।

## 4.3 शब्दामृते समागतानि अष्टाध्यायीसूत्राणि, लिङ्गानुशासनसूत्राणि, उणादिसूत्राणि चाहत्य प्रतिपादं सूत्रसंख्याविवरणम्

शब्दामृते ग्रन्थकारः स्वयमेव प्रतिपादं सूत्रसंख्यां श्लोकेन निर्दिशति। सर्वत्र पादान्ते प्रदत्ते श्लोके पूर्वार्द्धभागः समानो वर्तते– 'इति श्रीविप्रराजेन्द्रकृतं शब्दामृतं महत्' उत्तरार्द्धभागे च सूत्रसंख्यायाः निर्देशो वर्तते। तथाहि–

1.1 द्वीपेन्दुसाक्षिसंयुक्ते प्रथमे प्रथमं पदम्।। (प्रदत्तसूत्रसंख्या 219)
1.2 गुणाद्रिभिस्समायुक्ते प्रथमे द्वितीयं पदम्।। (प्रदत्तसूत्रसंख्या 73)
1.3 गुणखण्डैः समायुक्ते प्रथमे त्रितयं पदम्।। (प्रदत्तसूत्रसंख्या 93)
1.4 (क-लीथो) अङ्काम्बरेन्दुभिर्युक्ते प्रथमे तुर्यगं पदम्।। (प्रदत्तसूत्रसंख्या 109)
(ख-लीथो) अम्बरेन्द्विन्दुभिर्युक्ते प्रथमे तुर्यगं पदम्।। (प्रदत्तसूत्रसंख्या 110)
2.1 शशिसिन्धुसमायुक्ते द्वितीये प्रथमं पदम्।। (प्रदत्तसूत्रसंख्या 71)
2.2 वस्वाग्निभिस्समायुक्ते द्वितये द्वितयं पदम्।। (प्रदत्तसूत्रसंख्या 38)
2.3 त्रिसमुद्रसमायुक्ते द्वितये तृतयं पदम्।। (प्रदत्तसूत्रसंख्या 73)
2.4 भूताष्टकसमायुक्ते द्वितीये तुर्यगम्पदम्।। (प्रदत्तसूत्रसंख्या 85)
3.1 अग्निवाणेन्दुसंयुक्ते तृतीये प्रथमं पदम्।। (प्रदत्तसूत्रसंख्या 153)
3.2 रसवस्विन्दुसंयुक्ते तृतीये द्वितयं पदम्।। (प्रदत्तसूत्रसंख्या 186)
3.3 (क-लीथो) अब्ध्यग्निसागरैर्युक्ते तृतीये तृतयम्पदम्।। (प्रदत्तसूत्रसंख्या 734)
(ख-लीथो) मीराग्निसप्तसमायुक्ते तृतीये तृतयं पदम्।। (प्रदत्तसूत्रसंख्या 736)
3.4 मीरेन्दुचन्द्रसंयुक्ते तृतीये तुर्यगं पदम्।। (प्रदत्तसूत्रसंख्या 117)
4.1 (क-लीथो) समीराब्धीन्दुसंयुक्ते चतुर्थे प्रथमं पदम्।। (प्रदत्तसूत्रसंख्या 177)
(ख-लीथो) वस्वब्धीन्दुसमायुक्ते चतुर्थे प्रथमं पदम्।। (प्रदत्तसूत्रसंख्या 178)
4.2 (क-लीथो) सरवेदेन्दुसंयुक्ते चतुर्थे द्वितयं पदम्।। (प्रदत्तसूत्रसंख्या 145)
(ख-लीथो) वेदवेदेन्दुसंयुक्ते चतुर्थे द्वितयं पदम्।। (प्रदत्तसूत्रसंख्या 144)
4.3 वस्वृत्विन्दुसमायुक्ते चतुर्थे तृतयं पदम्।। (प्रदत्तसूत्रसंख्या 168)
4.4 द्व्यब्धिचन्द्रैस्समायुक्ते चतुर्थे तुर्यगम्पदम्।। (प्रदत्तसूत्रसंख्या 142)
5.1 वाणाग्निचन्द्रसंयुक्ते पञ्चमे प्रथमं पदम्।। (प्रदत्तसूत्रसंख्या 135)
5.2 द्विवेदेन्दुसमायुक्ते पञ्चमे द्वितयम्पदम्।। (प्रदत्तसूत्रसंख्या 144)
5.3 अङ्केन्दुचन्द्रसंयुक्ते पञ्चमे तृतयं पदम्।। (प्रदत्तसूत्रसंख्या 119)
5.4 नभश्शास्त्रेन्दुभिर्युक्ते पञ्चमे तुर्यगं पदम्।। (प्रदत्तसूत्रसंख्या 160)
6.1 (क-लीथो) गुणाक्ष्यक्षिसमायुक्ते षाष्ठेऽत्र प्रथमं पदम्।। (प्रदत्तसूत्रसंख्या 223)
(ख-लीथो) वेदाक्ष्यक्षिसमायुक्ते षाष्ठेऽत्र प्रथमं पदम्।। (प्रदत्तसूत्रसंख्या 224)
6.2 नवाङ्केन्दुसमायुक्ते षाष्ठेऽत्र द्वितयं पदम्।। (प्रदत्तसूत्रसंख्या 199)
6.3 शून्यवेदेन्दुसंयुक्ते षाष्ठेऽत्र त्रितयं पदम्।। (प्रदत्तसूत्रसंख्या 150?)
6.4 (क-लीथो) शास्त्राब्धीन्दुसमायुक्ते षाष्ठे च तुर्यगं पदम्।। (प्रदत्तसूत्रसंख्या 176)
(ख-लीथो) वेदाब्धीन्दुसमायुक्ते षाष्ठे च तुर्यगं पदम्।। (प्रदत्तसूत्रसंख्या 174)
7.1 गुणाम्बरेन्दु सँय्युक्ते सप्तमे प्रथमं पदम्।। (प्रदत्तसूत्रसंख्या 103)

7.2 (क-लीथो) चन्द्राक्षिवसुभिर्युक्ते सप्तमे द्वितयं पदम्।। (प्रदत्तसूत्रसंख्या 128?)
(ख-लीथो) खेताक्षीन्दुभिर्युक्ते सप्तमे द्वितयं पदम्।।

7.3 चन्द्राक्षीन्दुसमायुक्ते सप्तमे तृतयम्पदम्।। (प्रदत्तसूत्रसंख्या 121)

7.4 समीराङ्कसमायुक्ते सप्तमे तुर्य्यगम्पदम्।। (प्रदत्तसूत्रसंख्या 97)

8.1 वेदाद्रिभ्यां समायुक्ते त्वष्टमे प्रथमम्पदम्।। (प्रदत्तसूत्रसंख्या 74)

8.2 अङ्काम्बरेन्दुभिर्य्युक्ते त्वष्टमे द्वितयम्पदम्।। (प्रदत्तसूत्रसंख्या 109)

8.3 (क-लीथो) अङ्केन्दुचन्द्रसय्यँुक्ते त्वष्टमे त्रितयम्पदम्।। (प्रदत्तसूत्रसंख्या 119)
(ख-लीथो) अम्वराक्षीन्दुसंयुक्ते त्वष्टमे त्रितयम्पदम्।। (प्रदत्तसूत्रसंख्या 120)

8.4 अङ्काद्व्यशास्त्रसंयुक्तेत्यष्टमे तुर्यगं पदम्।। (प्रदत्तसूत्रसंख्या 69)

## 5. शब्दामृते सूत्रार्थव्याख्यानसरणिः

### 5.1 प्रायेण भट्टोजिदीक्षितमतानुसरणम्

5.1.1 शब्दामृते पाणिनिसूत्रार्थः प्रायेण भट्टोजिदीक्षितविचारितदिशा प्रवर्तते। क्वचिद् नागेशभट्टस्य मतमपि स्वीकृतं दृश्यते। यथा भट्टोजिदीक्षितेन वैयाकरणसिद्धान्तकौमुद्यां चतुर्दशसु सूत्रेषु हकारादिष्वकार उच्चारणार्थः प्रतिपादितः। किं च लण्-सूत्रस्थाकार इत्संज्ञकः प्रतिपादितः।[97] तत्फलं तु लण्-सूत्रस्थावर्णेन सहोच्चार्यमाणो वर्णो रेफो रलयोः संज्ञा इत्युक्तम्।[98] विप्रराजेन्द्रेणापि शब्दामृत एवमेव व्याख्यातम्। तथा हि 'आदिरन्त्येन सहेता' इति सूत्रे शब्दामृते विप्रराजेन्द्र आह - 'लेत्यकारादपि ग्राह्यो रेति भाष्यार्थकोविदैः'।[99] इति। 'उरण् रपरः' इति सूत्रेऽपि शब्दामृते उक्तम्- 'ऋलृवर्णेति सावर्ण्यात् तयोस्त्रिंशत् प्रभेदतः। स्थाने स्याद् रपरस्तद्वत् पूर्वेणैवाण् विनिश्चिनु।।'[100] इति।

5.1.2 'उपदेशेजनुनासिक इत्'[101] इति सूत्रे 'हलन्त्यम्'[102] इति सूत्रे च भट्टोजिदीक्षितेन उपदेशशब्दो भावघञन्तः स्वीकृतो दृश्यते।[103] विप्रराजेन्द्रेणापि अत्र उपदेशपदस्य व्याख्यानं तथैव कृतं वर्तते। तथा च 'उपदेशेजनुनासिक इत्' इति सूत्रे आह विप्रराजेन्द्रः - 'आद्यमुच्चारणं संज्ञि चोपदेशस्य मन्त्रवत्'[104] इति।

5.1.3 भट्टोजिदीक्षितेन 'हलन्त्यम्'[105] 'आदिरन्त्येन सहेता'[106] इति सूत्रयोर्मध्ये अन्योन्याश्रयदोषपरिहाराय 'हलन्त्यम्' इति सूत्रस्य आवृत्त्या व्याख्यानं विहितम्।[107] तथाहि हल्सूत्रान्त्यमित् स्यात् इत्यर्थकेन 'हलन्त्यम्' इति प्रथमसूत्रेण हल्-सूत्रान्त्यस्य लकारस्येत्संज्ञां विधाय 'आदिरन्त्येन सहेता' इति सूत्रेण 'हल्' प्रत्याहारं विधाय 'हलन्त्यम्' इति द्वितीयसूत्रस्यार्थम् - उपदेशे अन्त्यं हल् इत्स्यादिति सम्पादयति भट्टोजिदीक्षितः।[108] विप्राजेन्द्रेणापि 'हलन्त्यम्' इति सूत्रं तथैव व्याख्यातं वर्तते। तथाह विप्रराजेन्द्रः- 'तन्त्रावृत्त्येकशेषेण हलस्सूत्रान्त्यमिद् भवेत्'[109] इति।

5.1.4 'इको गुणवृद्धी'[110] इति सूत्रे भट्टोजिदीक्षितेन 'वृद्धिरादैच्'[111], 'अदेङ् गुणः'[112] इति सूत्रद्वयात् गुणवृद्धिपदमनुवर्त्य 'गुणवृद्धिशब्दाभ्यां यत्र गुणवृद्धी विधीयेते तत्रेक इति पदमुपतिष्ठते' इति सूत्रार्थो वर्णितः।[113] विप्रराजेन्द्रेणापि एवमेव सूत्रर्थो व्याख्यातः। तथाह विप्रराजेन्द्रः शब्दामृते 'इको गुणवृद्धी' इति सूत्रे - 'गुणवृद्धिपदावृत्त्या गुणवृद्धिपदेन ते। तत्र चेकः पदं सार्थं चोपतिष्ठेन्निरन्तरम्।।'[114] इति।

5.1.5 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्'[115] इति सूत्रार्थोऽपि विप्रराजेन्द्रेण भट्टोजिदीक्षितविचारितदिशा[116] व्याख्यातः। तथा चोक्तं विप्रराजेन्द्रेण - प्रत्ययं प्रत्ययान्तं च धातुं चाप्यत्र वर्जयेत्। तन्त्रादिनोभयार्थत्वाच्चार्थवत्त्वान्नाम ' संज्ञकम्।। वृत्त्यार्थबोधकं चात्र चैकार्थीभावमग्रतः। प्रत्ययग्रहं चात्र कुर्वतो हि द्विधा मतम्।।'[117] किं बहुना

विप्रराजेन्द्रेण सूत्रेऽस्मिन् भट्टोजिदीक्षितविचारितदिशा अत्र श्लोकरूपेण परिष्कारपक्षोऽपि उपस्थापितो वर्तते। तथा चोक्तं विप्रराजेन्द्रेण - एतत्संज्ञाफलभूतो यः प्रत्ययो यावदीरितः। ततोऽनपेक्षया लोके चार्थवत्त्वं प्रदर्शितम्।[118] इति। अयं विषयो दिङ्मात्रमेवात्र प्रदर्शितः। एवमन्यत्राप्यनुसन्धेयम्।

### 5.2 क्वचिन्नागेशमतानुसरणम्

5.2.1 किं च क्वचिद् विप्रराजेन्द्रेण भट्टोजिदीक्षितमतं नापि स्वीक्रियते। यथा 'नाज्झलौ' इति सूत्रे आकारप्रश्लेषं विनैव सूत्रार्थो वर्णितो विप्रराजेन्द्रेण।[119]

5.2.2 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा'[120] इति सूत्रे 'नियतोपस्थितिकः प्रातिपदिकार्थः' इति प्रतिपादयता भट्टोजिदीक्षितेन 'कृष्णः', 'श्रीः', 'ज्ञानम्' इति प्रातिपदिकार्थमात्रस्योदाहरणं प्रदत्तम्।[121] किं च नागेशेन 'कृष्णः' इत्यादिकं तु लिङ्गमात्राधिक्यस्योदाहरणं स्वीकृतम्। नागेशमते व्यक्तिः प्रवृत्तिनिमित्तं वा प्रातिपदिकार्थः स्वीकृतः।[122] विप्रराजेन्द्रः शब्दामृते प्रातिपदिकार्थसूत्रे नागेशभट्टमतं स्वीकुर्वाण एव दृश्यते।[123] एवमेव अन्यत्राप्यनुसन्धेयम्।

### 5.3 शब्दामृते महाभाष्यस्य विविधपक्षोपस्थापनम्

शब्दामृते सूत्रार्थव्याख्याने महाभाष्ये समुपस्थापितानां विविधानां पक्षाणां क्वचित् संक्षेपेणोल्लेखपूर्वकं सिद्धान्तपक्षः प्रस्तूयते। महाभाष्ये प्रत्याख्यातसूत्राणामपि तत्तत्सूत्रव्याख्याने एव सङ्केतः प्रदीयते। महाभाष्ये नैकानि सूत्राणि प्रत्याख्यातानि सन्ति। विप्रराजेन्द्रेण शब्दामृते प्रायेण महाभाष्ये प्रत्याख्यातसूत्राणां व्याख्यानप्रसङ्गे प्रत्याख्यानस्यापि निर्देशः प्रदत्तो वर्तते। तथा हि न 'धातुलोप आर्धधातुके'[124], 'दीधीवेवीटाम्'[125], 'सर्वादीनि सर्वनामानि'[126], 'अणुदित् सवर्णस्य चाप्रत्ययः'[127] 'न वेति विभाषा'[128], 'इग्यणः सम्प्रसारणम्'[129], 'एच् इग्घ्रस्वादेशे'[130], 'आदेः परस्य', 'प्रत्ययलोपे प्रत्ययलक्षणम्,'[131] 'स्वं रूपं शब्दस्याशब्दसंज्ञा'[132] इत्यादिसूत्राणां व्याख्याने प्रत्याख्यानप्रसङ्गोऽपि उपस्थापितो वर्तते।

### 5.4 शब्दामृते दार्शनिकविषयोपस्थापनम्

शब्दामृते यथास्थानं व्याकरणदर्शनस्य सिद्धान्ता अपि समुपस्थापिता वर्तन्ते। शब्दामृतस्य आरम्भादेव दार्शनिकविषयाणामुपस्थापनं लभ्यते। तथा हि मङ्गलश्लोक एव स्फोटब्रह्मवादस्योल्लेखः कृतो वर्तते।[133] एवमेव चतुर्दशानां माहेश्वरसूत्राणां दार्शनिकी व्याख्या विस्तरेण कृता वर्तते।[134] 'स्वरादिनिपातमव्ययम्'[135] इति सूत्रे धात्वर्थविचारः, 'समर्थः पदविधिः'[136] इति सूत्रे समासविचारः, 'विभाषा'[137] इति सूत्रे वृत्तौ जहत्स्वार्थाजहत्स्वार्थेति विचारः, 'प्रातिपदिकार्थ..'[138] इति सूत्रे नामार्थविषये विविधाः पक्षा वर्णिताः सन्ति। 'सम्बोधने च'[139] इति सूत्रे सम्बोधनस्य क्रियामन्वयो निरूपितः। 'वोतो गुणवचनात्'[140] इति सूत्रे गुणविषये विचारणा कृताऽस्ति। दार्शनिकविचारणायां बहवः श्लोकाः पूर्ववर्तिग्रन्थेभ्यस्तथैव स्वीकृता दृश्यन्ते।

## 6. शब्दामृतकर्तुः विप्रराजेन्द्रस्य परिचयः

शब्दामृतस्य अन्ते ग्रन्थकृता स्वयमेव स्वपरिचय एवमुपस्थापितो वर्तते -
वेदानां सामवेदैकस्तत्र शाखास्सहस्रशः। तास्वेका कौथुमीशाखा मध्यदेशे प्रतिष्ठिता।।
तस्यां विनिर्गतो देवाच्छैव्या धर्मधुरन्धरः। मन्युदत्तस्ततो जातश्शिवतत्त्वात्मनिर्वृतः।।
विप्रराजाह्वया मान्यो भूभृतामपि मानदः। मया तेनाद्भुतं मत्वा शिवयोः प्रीतिकारणात्।।
शब्दामृतं शब्दशास्त्रं निर्मथ्यामृतमद्भुतम्। सर्वविद्याभिसंयुक्तं पाणिनीयाष्टके परम्।।
वेदवेदाङ्गसारार्थसर्वविद्योपकारकम्। प्रियतामुयया शम्भुर्यत्तदाज्ञावशागमः।।[141]

उक्तश्लोकस्य अनुसारं विप्रराजेन्द्रस्य पितामहस्य नाम देवदत्तः मातामह्याः नाम शैवी आसीत्। तस्य पितुः नाम मन्युदत्तः आसीत्। अस्य वंशजाः सामवेदीया आसन्। राजेन्द्रदिग्विजयम्[142] इत्याख्ये लघुग्रन्थे काशीनरेशस्य सभायां विप्रराजेन्द्रस्य संजातायाः शास्त्रचर्चाया विवरणं लभ्यते। तदनुसारं विप्रराजेन्द्रः वाराणस्यां सुप्रसिद्धस्य विदुषः गङ्गाधारशास्त्रिणः समकालिक आसीत्। गङ्गाधारशास्त्रिणः कालः 'काशी की पाण्डित्य परम्परा'[143] इत्याख्ये ग्रन्थे सम्वत् 1910-1970 (ई. 1853-1913) उल्लिखितो वर्तते। विप्रराजेन्द्रस्य स्थितिरपि अस्मिन् कालखण्डे न्यूनाधिकभावेन स्यादिति मन्ये। अधिकमत्रानुसन्धेयम्।

## 7. शब्दामृतग्रन्थस्य लीथो विवरणम्

राष्ट्रिसंस्कृतसंस्थानस्य गङ्गानाथझापरिसरस्य सङ्ग्रहालये विप्रराजेन्द्रविरचितस्य शब्दामृतस्य लीथोग्रन्थस्य द्विविधं संस्करणं सुरक्षितं लभ्यते। राष्ट्रिसंस्कृतसंस्थानस्य गङ्गानाथझापरिसरस्य सङ्ग्रहालये सुरक्षितस्य एकस्य लीथोग्रन्थस्य Acc. No. 37159 इति वर्तते। एतस्य लीथो ग्रन्थस्य मुद्रणकालस्य स्थानस्य च विषये ग्रन्थान्ते एवमस्ति उल्लेखः- कर्तिक ब.पं.सं. 1932, बनारस। अस्य लीथोग्रन्थस्य अन्ते मुद्रणालयस्य एवमस्त्युल्लेखः- विद्योदयो निराकुर्यादविद्यातिमिरं सदा। सहस्रांशुरिवाशेषं मुद्राकिरणराजिभिः।।

राष्ट्रिसंस्कृतसंस्थानस्य गङ्गानाथझापरिसरस्य सङ्ग्रहालये सुरक्षितस्य अपरस्य लीथो-ग्रन्थसंस्करणस्य Acc. No. 35996 इति वर्तते यस्य मुद्रणकालः संवत् 1941 वर्तते। एतस्य संशोधानं विप्रराजेन्द्रस्य शिष्येण शिवदासेन कृतमिति लीथोग्रन्थस्यान्ते उल्लिखितं वर्तते। अस्मिन् लीथोग्रन्थे अन्ते अस्त्ययमुल्लेखः-

विद्योदयो निराकुर्यादविद्यातिमिरं सदा। सहस्रांशुरिवाशेषं मुद्राकिरणराजिभिः।।

अलभ्यं यद्यदन्यस्मात् तल्लभ्यमितो ध्रुवम्। विद्याविभूषणे यन्त्रे मुद्रितोऽयं शिलाक्षरैः।।

गुरुपुङ्गवविप्रसु राजगुरुस्तत आर्यवर्यसुशिष्यवरुः।
द्विजवेशमणिशिवदाससुधीकृतयन्त्रसुयन्त्रितशुद्धकृतिः।।

## 8. शब्दामृतस्य सम्पादनम्

उक्तयोर्लीथोर्ग्रन्थयोराधारेण शब्दामृतग्रन्थो राष्ट्रिसंस्कृतसंस्थानस्य गङ्गानाथझापरिसरस्थेन प्रकृतलेखलेखकेन सम्पादितो वर्तते।

## 9. उपसंहारः

महावैयाकरणोऽयं विप्रराजेन्द्रः तस्मिन् काले अष्टाध्यायीक्रमेण शब्दामृतम् इति व्याख्यानमकार्षीद् यस्मिन् काले प्रक्रियाक्रमस्यैव सर्वत्र डिण्डिमघोषः श्रूयमाण आसीत्। भट्टोजिदीक्षतनागेशभट्ट-प्रभृतिभिर्विचारितदिशा सूत्रार्थविमर्शस्य महत्त्वमवगम्यापि पाणनीयष्टकक्रमस्य महत्त्वमपरित्यज्य पाणिनीयाष्टाध्यायीव्याख्यानपरम्परा एतेन विदुषा भृशं संवर्धिता। सूत्रार्थविचारे प्रक्रियाक्रमेण समागतानां परिष्कृतविचाराणामप्यत्र समावेशो दृश्यते। धातुपाठलिङ्गानुशासनगणपाठानाम् अष्टाध्यायीक्रमेण समावेशः ग्रन्थस्य महत्त्वं वर्धयति। दार्शनिकविषयाणामुपस्थापनं ग्रन्थस्य पूर्णतां गमयति। व्याकरणशास्त्रस्य नीरसानामपि विषयाणां श्लोकैरुपस्थानं ग्रन्थस्य सरसतां प्रकटयति। नैकवैशिष्ट्यसमन्वितोऽयं शब्दामृत-ग्रन्थोऽष्टाध्यायीक्रमेण पाणिनीयं शास्त्रमधीयानानां कृते महते समुपकाराय कल्पिष्यते इति मे प्रतिभाति।

**सङ्केताः**

पा.सू. - पाणिनिसूत्रम् (पाणिनीयाष्टाध्यायीसूत्रम्)

**''यतः प्रभृतिः समागतेयमत्र गृहस्य हासो लुप्तः। कियद् वारमुपदिष्टम्मया- वत्से! रामायणं पठ। गीताभ्यासं कुरु।.......न वयं संस्कारहीना निम्नजातीया वा। पुत्रि! त्वां पाणिभ्यां ग्राहयितुं न वयं समर्था।.......परन्तु इयं हतभाग्या तत्सर्वं न करिष्यति।''**[15] विविध-विधानां पण्डितस्य सर्वकारीयसेवानिवृत्तस्यैवं च परिपक्वविवेकवतः स्वपितुः उपेक्षापूर्ण-व्यवहारेण सा अधिकतया दुःखिनी भवति। स्वपुत्रस्य सुखसुविधानां ध्यानं सः प्रतिक्षणं करोति। अत्र विधवायाः अन्तर्व्यथायाः चित्रणं लेखकः मार्मिकतातन्मयताभिश्च सह कृतवान्। वन्दना चिन्तयति- **''विधवाऽस्मि जाता किमपराद्धम्मया? यो मामसहायां विहायोपद्रुतः मां विधवाममङ्गलकारिणीञ्चोद्घोष्य पलायितः, मम सौख्यं सौधं भस्मसात्कृत्य विलीनः, किन्तेन नापराद्धम्''**[16]। अन्ततः स्ववृद्धपितुः भोगलिप्सां तां प्रति च तस्योपेक्षितं दृष्टिकोणं ज्ञात्वा सा स्वयमेव स्वभाग्यस्य निर्णयं कुर्वती चैकस्मिन् दिवसे गृहाद् बहिः निर्गच्छति। एवं लेखकः भारतीय-समाजे विधवास्थितीनां विश्लेषणात्मकं वर्णनं समग्रताभिः सहजताभिश्च सह अकरोत्। अत्र शिक्षितसमाजस्य रूढिवादितासु प्रहारं कृत्वा स्त्रीचेतनामुद्बोधनाय प्रयत्नः कृतः।

'शतपर्विका'[17] इत्यस्यां कथायां सप्तकन्यकानां पितुः पुत्रं प्रति मोहपूर्णावधारणायाः चित्रणं वर्तते। पुत्रलालसया सन्तप्तः पिता रामलालः स्वसप्तकन्याभिः सह कदापि सप्रेम न अवादीत्। रक्षा-लेखाविभागे लिपिकेन चत्वारिंशद्वर्षीयेन पित्रा सर्वदा भयभीताः सङ्कुचिताश्च पुत्र्यः एव तस्याश्रयभूताः भवन्ति यदा वार्धक्ये सः रोगग्रस्तोऽजायत। वंशदीपेच्छायां सः स्वभागिनेयं श्यामलालं दत्तकपुत्ररूपेण स्वीकरोति। श्यामलालः लम्पटो व्यसनी सप्तदशवर्षीयः युवकोऽस्ति यस्य सकाशात् पिता सर्वदा असन्तुष्टः एव तिष्ठति। कार्यालयात् प्रत्यावर्त्तनकाले पुत्र्या रमया पितुः समक्षं जलपानानुरोधः तस्याः पितुः क्रोधभाजनमेव भवति। अभ्यन्तरे रूदतीं रमां दृष्ट्वा भगिन्यः विचारयन्ति-''सर्वा भगिन्या पुञ्जीभूताः। अग्रजा रोदिति। किमर्थं रोदिति। केन किं कथितम् ? पित्रा किञ्चिदप्रियं भाषितम् इति बहुविधा प्रश्ना क्षणमात्रेणैव समुत्थिताः।''[18] रुग्णपितुः सेवां रमा तस्य चयनानन्तरं रात्रौ करोति। जागृतः रामलालः तृप्तो भूत्वा पुत्रीं प्रति वात्सल्यभावेन पश्यति। कथायां पुत्रीणां मातापितरौ प्रति सेवाभावसमर्पणयोः तथा भारतीयसमाजे व्याप्तस्य पुत्रमोहस्य विश्लेषणात्मकानि वर्णनानि सन्ति।

'चञ्चा'[19] इत्यस्यां कथायां मुन्नीबाई इति नामधेयां वेश्यां कृत्वा निरञ्जनः अद्य समाजे सम्मानितं जीवनं यापयति। दुन्दुभिवादकेन महेश्वरेण सह पारिवारिकजीवनं यापयन्त्या मुन्नीबाईत्यस्याः पुत्र्याः सीमायाः प्रेमविवाहः विश्वविद्यालयस्य केनचिदाचार्येण सह भवति। तथ्यमिदं निरञ्जनाय न रोचते। सः सीमायाः वैवाहिकं जीवनं नष्टं कर्तुं मुन्नीबाई न्यायालये नीत्वा तिरस्काराय प्रयासं कृतवान्। अत्र मुन्नीबाईत्यस्याः रूपे महिलासशक्तीकरणं स्त्रीसंघर्षं च चित्रितं कुर्वन् लेखकः न्यायालये न्यायाधीशसमक्षं निरञ्जनस्य जीवनस्य कुत्सितरहस्यमुद्घाटयन् तस्य भर्त्सनां करोति। डा. मिश्रः नार्याः मनोगतभावानां चित्रणेन सहैव तस्याभ्यन्तरे सुप्तां नारीचेतनां प्रबोधयितुं प्रयत्नमपि कृतवान्।

डा. प्रमोदभारतीयस्य कथासंग्रहः 'सहपाठिनी'[20] संस्कृतकथाजगति नारीचेतना-विमर्शस्य केन्द्रं भवति। द्वादशलघुकथासु कथाकारः नार्याः पारम्परिकादर्शरूपेभ्यः बहिरागत्य तासामत्याधुनिकयथार्थरूपस्य प्रस्तुतीकरणेन सहैव नारीणामस्मिताप्रकाशने जिजीविषेत्याद्यभिव्यक्तीकरणेऽसफलः प्रतीयते। अत्र नारी-मनसां विश्लेषणात्मकाङ्गेन सहैव नारीः प्रति समाजस्य दृष्टिकोणस्याभिव्यक्तिर्दृश्यते। एतेषां लक्ष्यानां प्राप्तये लेखकः विविध-परिस्थितीनां सर्जनं यथार्थपरिवेशेऽकरोत्। 'पारितोपिकम्'[21] इत्यस्यां कथायां न केवलं नारी-मनोभावानां किन्तु नारीः प्रति पुरुषस्य प्रगतिशीलभावानामप्यभिव्यक्तिर्द्रष्टुं शक्यते। नायिकायाः निशायाः रूपसौन्दर्यं दिवाकरस्यैक-मेवावलम्बनमिवास्ति। निशायाः शोधकर्मणि सहायतामाचर्य पारितोपिकरूपेण सः तस्याः प्रणयभावनायाः

स्वीकृतिं वाञ्छति। किन्तु सांस्कृतिक-मर्यादा-मूल्यानाञ्च चित्रणं प्रति लेखकस्य सतर्कतायाः फलस्वरूपमत्रांशकालिकसंयोगेन सह पुनःसंयोगस्याशया सह वियोगः परावर्तते। 'व्यभिचारिणी'[22] इत्यस्यां द्वितीयकथायां कथानायिकाया क्षुरिण्या यौवने पथभ्रष्टस्य तथा समाजेन तस्यै स्वत्रुटिसंशोधनाय क्षमादानस्य प्रतिष्ठा-प्रदानस्य वर्णनमस्ति। अत्र त्रुटिशोधनेन सह समाजगतस्यौदार्यस्याङ्कनमस्ति। अन्ततः महिलेयं सामाजिककार्येषु राजनीतिक-जनसेवावासु च स्वप्रभावपूर्णं योगदानं कुर्वन्ती महिलाप्रकोष्ठस्य अध्यक्ष्या निर्वाचिता भवति। 'पक्षपातः'[23] इत्यस्यां कथायां एकश्छात्रः नार्याकर्षणस्यावद्धात् सुरक्षार्थं कस्यचिद्गुरोः कठोरानुशासनस्य वर्णनं कुर्वन् कथाकारः नारीभ्यः नवयौवने सम्भाविताभ्यः तीव्रोत्कण्ठा-चपलताभ्यः रक्षणाय प्रेरणाः प्राददत्। यथार्थसमये प्राप्तैः गुरोःसमुचितनिर्देशैः सफलतां लब्धमानः छात्रः स्वयं कथयति- **''यदि गतवर्षे सः मां मोहिन्या इन्द्रजालात् न बहिरानेष्यत् ममेदृशः परिणामो न अभविष्यत्।''**[24] 'मलिनवसनम्'[25] इत्यस्यां कथायां प्रगतिशील-विचारान् प्रतिपादयन् सामाजेन तिरस्कृतां स्वपुत्रस्य प्रियतमां वेश्यापुत्रीं पुत्रवधुरूपेण स्वीकुर्वन् कथाकारः आत्मिकपवित्रताः सुन्दरताश्च मान्यताः प्रायच्छत्। एतस्यां कथायां कथाकारः अमुं शरीरं वस्त्रसदृशं वर्णयति। अत्र वेश्याः प्रति सामाजिकस्य दृष्टिकोणस्य स्वाभाविक्यभिव्यक्तिः चित्रिताऽस्ति। एतया सहैव कयाचित् मात्रा तस्यै पुत्रवधूरूपेण स्वीकृतिं प्रददन् कथाकारः तस्याः क्रान्तिकारिविकासशील-स्वागतयोग्यविचारान् प्रकटयति।

'आश्चर्यम्'[26] इत्यस्यां कथायां कश्चन सच्चरित्रः प्रणयी नायकः स्वप्रेयसीं देहव्यापारे संलिप्तां दृष्ट्वा स्तब्धो भवति। अत्र नार्याः चारित्रिकदुर्बलताः व्यक्तीकृत्य महानगराणामेवं च शिक्षणसंस्थानां छात्रावासेषु निवसतां छात्राणां जीवनस्य यथार्थमङ्कनं कृतवान्। अत्र पारिवारिक-पारम्परिकादर्शसंस्कारेभ्यो दूरेऽवस्थितानां छात्राणां चित्तेषु विभिन्नप्रसारमाध्यमैः वितरितायाः पाश्चात्त्यसंस्कृतेः दुष्प्रभावा अपि संकेतिताः सन्ति। अत्र भोगवादिभौतिकवादिदृष्टिकोणानां प्रभावेषु युवप्रौढेषु जायमानं नैतिकपतनं चित्रितं वर्तते। 'चतुष्कोणः'[27] इति कथा प्रेमसंबन्धानां किशोरशारीरिकाकर्षणानां च निराशपरिणत्याधृताऽस्ति। अत्र अपरिपक्वप्रेम्णः तथा नार्याः शारीरिकसौन्दर्यं प्रति आकर्षणस्येवं च बहुकोणीयप्रेमसंबन्धानां यथार्थाङ्कनं कृतमस्ति। सहैव कथाकारः नार्याः भोगवादप्रवृत्तिं यौतुकलोलुपतां च दर्शयति। 'अंशकालिकः पतिः'[28] इत्यत्र काचिदाधुनिका नायिका स्वपत्युः आचारव्यवहाराभ्यामसन्तुष्टा भूत्वा तं तिरस्कृत्य निरन्तरं तं दुःखिनं करोति, तस्मै पीडां च ददाति। अत्र नायिकायां स्वपत्युरन्यपुरुषैः तुलनाकरणस्य प्रवृत्तेरङ्कनमस्ति। अत्र कथाकारः स्त्रीपुरुषयोः वादविवादस्य सजीवं चित्रणमकरोत्। अत्र कथाकारः पत्न्याः स्वच्छन्दामर्यादितव्यवहारस्य मनोवैज्ञानिक-कारणान्यपि सङ्केतयति। यथा- पत्युरन्तर्मुखिसंवेदनशील-प्रवृत्तिः, पत्न्याश्च बहुर्मुखी व्यवहारवादी स्वभावः, प्रतिवेशीषु पत्युरधिकप्रशंसापात्रता लोकप्रियता तथा च आदर्शपत्युः स्वभावोऽत्र चित्रितो वर्तते। सामान्यतयेदृशं पतिं प्राप्य स्त्रियः आत्मानं सौभाग्यवतीं धन्यां च मन्यमानाः श्रेष्ठाचरणं प्रस्तुवन्ति। किन्त्वद्यतनीयात्याधुनिकनार्यः पत्युः प्रशंसायामीर्ष्यां लभन्ते। **''वस्तुतः कालोन्याः स्त्रिणां मध्ये भवतः विषयेऽस्ति बहु सुन्दरो विचारः। मम गृहिणी तु भवतः प्रशंसिकैवास्ति।..सा कथयति यद् यदि पतिर्भवेत् तदा भवत्सदृशः स्यात् ..।''**[29]

'हृदयवेदना'[30] इत्यस्याः कथायाः नारी मल्लिका न केवलं सुन्दरी अपितु तस्यां स्वसुन्दरतायाः ततश्चोत्पन्नानां सामाजिककाठिन्यानां ज्ञानमप्यस्ति। अत एव सा स्वसहकर्मिणां मध्ये स्वात्मानं कठोरानुशासनप्रियनारीरूपेण प्रस्तौति येन शारीरिकसौन्दर्येणाकर्षणादुत्पन्नानां समस्यानां रक्षा स्वयमेव भविष्यति। स्वाभिमानिनो नायकस्यात्मिकं प्रणयं प्राप्य मल्लिकाऽपि भावप्रवणतायाः शिखरमारोहति। अत्रादर्शाधुनिकनार्याः कार्यक्षेत्रं गृहाद्बहिः विस्तारितमस्ति, तस्याः मनोविज्ञानं च प्रस्फुटितं दृश्यते। विषम-विवाहस्य विसङ्गतीनां विधावाविवाहगत-समस्यानाम् अथवा विकृतीनां प्रतिबिम्बनं कुर्वन्त्यां 'सौप्रस्थानिकम्'[31] इत्यस्यां कथायां निर्धननायिकायाः विवाहः स्वस्याः त्रिगुणायुर्युक्तेन सुखदेवेन सह जायते। तस्यैव सुखदेवस्य पुत्राणां

तिरस्कारग्लान्युपेक्षाभिः विवशा भूत्वा सा गृहत्यागं करोति। अन्ततः सामाजिकादर्श प्रस्तुतवत्यास्तस्याः विवाहः केनचित् सुयोग्येन पुरुषेण सह भवति। 'अनुमतिः'[32] इत्यस्यां कथायां नायकः द्वादशवर्षोपरान्तं नायिकया संयोगस्यानुमतिं प्राप्यापि विवाह-संस्कारं प्रत्यास्थां प्रदर्शयन् आशावादीनमादर्श च दृष्टिकोणं व्यनक्ति। 'चक्रवातः'[33] इति कथायां कस्याश्चिद् विवाहितायाः पुत्रद्वयस्य च जनन्याः दाम्पत्यं यन्त्रवत् प्रदर्शितमस्ति। व्यवसायिनः पत्युः अतिव्यस्तताभिः असन्तुष्टा नायिका वाहिका मधुपेभ्यः समर्पिता भवति। अतिव्यस्त- जीवनशैल्युत्पन्नानां विसङ्गतीनां तथा नैतिक-मूल्यानामवमूल्यानां तथा विवाहेतरसंबन्धानां वर्द्धमानाः स्वीकार्यताः दर्शयता कथाकारेणात्र समाजस्य यथार्थाङ्कनं कृतमस्ति। 'सहपाठिनी'[34] इत्यस्यां कथायामाधुनिकयुवत्याः विचाराः प्रतिफलिताः सन्ति। अत्र नायकस्य स्वसहपाठिनीं प्रति विशेषाकर्षणस्य, परस्परवार्तालापस्य स्नेहव्यवहारस्य च चित्रणं स्वाभाविक- सहज-परिवेशे प्रस्तुतमस्ति। नायकः एताः भावनाः परिणयसूत्रं यावत् न प्रापयति। किन्तु केतक्याः व्यावहारिकाधुनिकदृष्टिकोणः कथायै यथार्थसंवेगात्मकमन्तं ददाति। सा कथयति- ''सहपाठिनी केवलं सहपाठिनी भवति, सहजीवनी न भवति।''

एवमेषः कथासंग्रहः नारीजीवनस्य विविधपक्षैः संलग्नाभ्यः, विसङ्गतिभ्यः, विडम्बनासमस्याभ्यश्च प्रति समर्पितः सन् तासां नैतिकानैतिक- मर्यादितामार्यादितादर्शयथार्थरूपाणामभि-व्यंजनां मनोविज्ञानिक-परिवर्तन-शीलसामाजिक- मूल्यमानकानां सन्दर्भे प्रस्तौति।

डा. बनमाली बिश्वालः सर्वहारावर्गीय-संस्कृतेः यथार्थाङ्कनं कुर्वन् नानाविधनारीपात्राणां च सर्जनं कुर्वन् तासां जीवनानां विसङ्गतीनां तासाञ्च क्रियाकलापानां विश्लेषणानि सामाजिकस्थितीनामाधारेषु प्रस्तौति। यथा चम्पी,[35] अभीप्सा,[36] भ्रान्ततारका,[37] सुमित्रा,[38] अपमृत्योः पुनर्जन्म,[39] आस्थायाः अनास्था[40], दुश्चरित्रा[41], जिजीविषा[42], मध्येस्रोतश्चेत्यादयोऽनेकाः[43] कथाः। 'चम्पी'[44] इत्यस्यां कथायां सामाजिक-शोषणग्रस्तायाः कस्याश्चिद् विक्षिप्तनार्याश्च वात्सल्यपरकानुभूतीनां यथार्थाङ्कनमस्ति। 'अभीप्सा'[45] इत्यत्र विधवानार्याः जीवन्त-जिजीविषायाः जीवन-शक्तिश्च मरणान्तकः जीवनसंघर्षः रूपायितोऽस्ति। 'भ्रान्ततारका'[46] इत्यस्यां कथायां कथानायिकायाः सरितायाः प्रेम्णि कपटविश्वासघाताभ्याम् समुत्पन्नायाः व्यथायाः एवं च तया निर्देशितस्य तस्याः आचरणस्य मनोविश्लेषणात्मकं वर्णनमस्ति। सरितायाः सौन्दर्येणान्यगुणैश्चाबद्धः शेखरः तस्यां प्रीणाति। परन्तु केनचित् रुजा पीडिता सरिता यदा कुरूपा संजाता। तदा शेखरः तया सह न विवाहं रचितवान्। अत्र विश्वासघातेना पीडितायाः नायिकायाः कार्य-व्यवहारमानसिकव्यथानाञ्च यथार्थाङ्कनं प्राप्यते। 'सुमित्रा'[47] इति कथायां लेखकः कस्यचित् पत्युः जीवने पत्न्याः महत्त्वस्य निरूपणं मनोव्यापारात्मक-पृष्ठभूमौ रूपायितं करोति। कथा 'आस्थायाः-अनास्था'[48] इत्यत्र लेखकः कस्याश्चित् चतुराया आधुनिकयुवत्याः दूरगामिनः चिन्तनहीनस्यास्थाविहीनजीवनस्य चित्रणेन सहैव पुरुषसमाजस्य नारीगतदुर्बलतालोलुपतादीनां क्षणिकसंवेदनाद्यभिव्यक्तीनां स्वार्थपरकवृत्तीनां प्रकाशनं कृतमस्ति। 'निसङ्गजीवनम्'[49] इत्यस्यां कथायां लेखकेन कस्याश्चिद् वृद्धायाः अदम्यजिजीविषायाः मार्मिकं चित्राङ्कनं कृतम्। 'मध्येस्रोतः'[50] इत्यत्र नायिकायाः नाचम्मायाः पत्युः प्रत्यावर्तने संशयात्मिकायां स्थितौ जीविकार्थे समाजस्य कुतत्त्वानां समक्षमात्मसमर्पणं कुर्वती पतनस्य गर्ते गच्छति। पक्षान्तरे 'वासुदेवस्य जन्मदिनम्'[51] इत्यस्यां कथायां शङ्करी पत्युरत्याचाराणि सहन्ती अपि स्वसतीत्वरक्षार्थं कस्यचिदधिकारिणः हत्यां कृत्वा स्वस्य स्वपुत्रस्य च जीवनं सङ्कटे पातयितुं पश्चात्पदा न भवति। तस्य कस्याञ्चित् कथायां नार्याः दुर्बलचरित्रम् अपरस्यां कथायां तु मर्यादोत्प्रेरितादर्शाचरणस्य चित्रणमस्ति। लेखकः दलितनार्याः पतनोन्मुखिनो जीवनस्य गहनानुभूतिः प्रायः स्वकथासु विषयीकरोति।

डा. केशवचन्द्रदाशस्यानेकाः कथाः नारीमनो-मस्तिकं सूक्ष्मातिसूक्ष्मरूपेणोद्घाटयन्ति। ऊर्मिचूडा[52], पन्था[53], प्रतिवेशी[54], अपरपर्यायः,[55] युगान्तिका[56], स्मितस्यन्दा[57], निकटतमाः[58], व्याहृतिः[59], तिरस्करिणीच्छाया[60], माहेन्द्रलिपिः[61], इत्यादयो नैकाः कथाः नारी-पात्राणां चित्रणं यथार्थपरकमनोविश्लेषणात्मकशैल्यां कुर्वन्ति। 'युगान्तिका[62]' इत्यस्यां कथायां कस्याश्चिदुन्मादिन्याः नायिकायाः बहुविधशोषणं कुर्वतः समाजस्य चित्रणमस्ति। अस्यां कथायां स्वनवजातशिशुं प्रति विक्षिप्तायाः मातुः वात्सल्यभावः मर्मस्पर्शी वर्तते। नार्याः मातृत्वमेव तस्योदात्तत्वं सर्वमान्यास्तित्वञ्चास्ति। डा.वनमाली विश्वालस्य कथा 'चम्पी'[63], डा.केशवचन्द्रदाशस्य कथा 'युगान्तिका'[64] इत्यनयोः नारीशोषणोपरि मार्मिकाभिव्यक्तिः चित्रिताऽस्ति यत्र अबलाया नार्याः विक्षिप्तताजन्यदुर्दशायाः यौनशोषणस्य सामाजिक-विकृत-परिहासानामङ्कनं दृश्यते। मानवसमाजस्यामानवीयपक्षस्योजागरणैः सहैवैकाकिन्या असहायाया नार्याः बहुमुखिनः शोषणस्य विवशमानसिकतायाश्च प्रभावपूर्णं चित्रणं वर्तते।

'निकटतमः[65]' इत्यस्यां कथायां कस्याश्चिदत्याधुनिकाया नार्याः चारित्रिक- विशेषतानां गुम्फनं साङ्केतिकरूपेण प्रदत्तमस्ति। पुरुषप्रधानसमाजे नायिकायाः सावित्र्याः दुर्दशायाः चित्रणं कुर्वन्त्यां 'पन्था[66]' इति कथायाम् असहाया अविवाहिता च कथानायिका गर्भधारणरूपाम् असह्यपीडां सहन्ती यदा मृत्योः शरणं जिगमिषति तदैव मधुकरः तस्याः प्राणरक्षायै तया सह पुनर्विवाहं कृत्वा स्वगृहम् आनयति। यत्रागत्य सावित्री मधुकरस्य पूर्वपत्नीविषये तस्य सामान्यार्थिकस्थितिविषये च जानाति। मधुकरः सावित्र्यै स्वनामाश्रयं पृथक् निवासं ददाति। कालान्तरे नगरीय-जीवनस्य महत्वाकांक्षाप्रभावात् संस्कारेषु च पतनप्रभावात् परिस्थितयः परिवर्तिताः भवन्ति। परिवर्तितपरिवेशे सावित्र्याः उच्चस्तरीयनिवासस्य तस्याः उच्चवर्गे प्रवेशस्य प्रमुखतायाः तथा राजनेत्रधिकारिभिः सह घनिष्ठसंबन्धानां माध्यमेन तस्याः अमर्यादितानि अनैतिकाचरणानि व्यञ्जितानि भवन्ति। या सावित्री गर्भवती भूत्वा आत्महत्यायै उद्यताऽऽसीत् सा एव परिवर्तनशीले पतनशीले च पुरुषसत्तात्मके समाजेऽद्य मधुकरस्य नामाश्रये कुसंस्काराणां गुल्मानि वर्धयति। मधुकरोऽपि सावित्री-माध्यमेन स्वार्थिकसमस्यानां सहजसमाधानं प्राप्य प्रसन्नोऽस्ति। अत्र वस्तुतः संबन्धानां नवीन-परिभाषा वर्णिताऽस्ति।

डा. नारायणदाशस्य 'चिन्नामायाश्छुरिका[67]', मानसी[68], श्रावणी[69], दुश्चरित्रा[70], कर्णपुष्पम् इत्येतासु कथासु विविधनारीपात्राणां नानाविधसमस्यानां च रूपायनं कृतमस्ति। 'चिन्नामायाश्छुरिका' इत्यस्यां कथायां दुराचारिणः शिक्षामन्त्रिणोऽन्धकामनाया शोषितायाः नायिकायाः प्रतिशोधाग्नौ दग्धमाना जीवनचर्या, अन्ततः स्वप्रतिशोधापूर्तेश्च वर्णनमस्ति।

डा. प्रमोदकुमारनायकस्य प्रेरणादायिनी[71], पापिनी[72], प्रेम[73], रूपाजीवा[74], जयन्ती[75], परित्यक्ता[76], अभिजात्यं पत्रमित्यादिषु[77] कथासु नारीजीवनस्य यथार्थाभिव्यक्तिः द्रष्टुं शक्यते। 'रूपाजीवा' इत्यस्यां कथायां समाजस्य निर्ममतायाश्चित्रणमस्ति। अत्र कस्याश्चिद् विवशायाः पीडितायास्तथाऽसहायायाः नार्याः सर्वस्वमपहृत्य समाजः तां बहिष्कृतामपि करोति। अपरं चान्तहीनानि शारीरिक-मानसिक-दुःखानि निर्वोढुमपि विवशीकरोति- ''अपरूपा दारिद्राघातेन मरणोन्मुखिनः पितुः औषधिक्रियार्थं यदा श्रेष्ठिनो गृहं गतवती, तदानीं श्रेष्ठिपुत्रेण एतस्याः सर्वमपहृतम्। ततः ग्रामवासिभिः एषः निर्णयः विहितः यत्सा ग्रामे स्थास्यति चेत्तद् ग्रामस्य पतनं भवेत्। परिशेषे मृतं पितरं विहाय अपरूपा ग्रामस्य बहिर्भागे निर्जनप्रदेशे निवसति। एवमेकदा रात्रिकाले सा कस्यचित् कराघातं कपाटे शृणाति। अपरूपा एतत् किं पश्यति ? ग्रामस्य मुख्यन्यायाधीशः तस्याः निकटे भिक्षां याचते। अन्यथा तस्याः प्राणनाशः भविष्यति इति भाययत्यपि न्यायाधीशः। अङ्गीकरोति अपरूपा।''[78]

'परित्यक्ताया आभिजात्यम्'[79] इत्यस्यां कथायां पितुः मरणोपरान्तं त्रिभिः भ्रातृभिः परित्यक्तायाः कस्याश्चिद् भगिन्याः व्यथाऽत्र संकेतिता वर्तते। समाजस्य नियामकानां रक्षकानामेव भक्षकरूपं प्रस्तुतीकरोति कथा 'पापिनी'[80]। अस्यां कथायां नायिकायाः विमलायाः दुःखद-मर्मान्तिकावस्था वर्णिताऽस्ति।

डा. रवीन्द्रकुमारपण्डा-महोदयस्य 'महाप्रसादम्'[81], नष्टनक्षत्रम्[82], छिन्नच्छाया:[83], नरपशु:[84], जञ्जालजालम्[85], स्वर्णपिञ्जरम्[86] इत्यादीनां कथानां रचना-तन्त्रं नारी-जीवनस्य काठिन्य-परिस्थितीनां परिपार्श्वे आधृतमस्ति। 'नरपशु:'[87] इत्यस्यां कथायां परस्त्री-प्रेमासक्तेन पतिना सर्वतोपेक्षिताया: नन्दिन्या: व्यथा-कथानां निरूपणं कृतमस्ति। नन्दिनी असह्य-दु:खानि सोढ्वा अन्तत: गृहत्यागं करोति। पुरुषप्रधानसमाजेऽपि सैकाकिनी स्वपुत्राभ्यां सह सफलजीवनं यापयति। अत्र स्त्री- संघर्षस्य तथा तन्मनोबलस्याङ्कनमस्ति। 'जञ्जालजालम्'[88] इत्यस्यां कथायां कस्याश्चिद् गृहिण्या: व्यस्ततमदिनचर्याया: समस्तपारिवारिकसदस्यान् प्रति कर्तव्यभावानां मौनसमर्पणमूकव्यथानाञ्च स्वरा: उपस्थिता: सन्ति- ''**गृहं तस्या: गगनम्। परिवारस्तस्या: पृथिवी। पतिस्तस्या: परमेश्वर:। सन्तानानां प्रमोदे सा पश्यति स्वर्गसौन्दर्यम्। दु:खेऽस्ति तस्या: दु:खम्। परिवारस्य सुखेऽस्ति तस्या: सुखम्। सर्वेषां प्रसन्नतायां तस्य प्रमोद:। तस्मात् प्रतिपदं कर्म, कर्म, कर्म। कर्म विना नास्ति यथा किञ्चित् तस्या: जगति। तस्या: प्रात: प्रारभ्यते कर्मणा। संध्या समाप्यते कर्मणा।.....।**''[89]

अत्र ग्रामीणाल्पशिक्षिताया: सङ्कोचशीलाया: युवत्या: समस्यानां कश्चन साक्षात्कारोऽस्ति। 'छिन्नच्छाया'[90] इत्यस्यां कथायां पत्यु: सुनामीतरङ्गेषु निमग्ने सति मधुरिमाया: दु:खपूर्णजीवनस्य समग्र-व्यथाया: भावपूर्ण वर्णनमस्ति। कथानायिकाया: स्मिताया: अध्ययनशीलताया:, निर्धनताया:, तस्या: विवाहस्य, विवाहोपरान्तञ्च तस्या: पारिवारिकसामाजिकस्थितीनां विवेचनं 'स्वर्णपिञ्जरम्'[91] इति कथायां कृतं वर्तते। अत्रैकस्या: प्रतिभावत्या: बालिकाया: असमयेऽयोग्यगृहे च विवाहादुत्पन्नाया: विवशावस्थाया: प्रभावि वर्णनं कृतमस्ति।

एतासु कथासु नार्या: मातृत्व- पत्नीत्व- प्रेयसीत्व-छात्रात्व- पुत्रीत्वादि-विविधरूपाणां वर्तमानसामाजिक-सन्दर्भेषु वर्णनं दृश्यते। डा. बिश्वालस्य, डा.नारायणदाशस्य च 'दुश्चरित्रा'[92] इति समानशीर्षकाङ्कितयो: कथयो: नारी: प्रति पूर्वधारणा: पूर्वानुमानानि पश्चात्तापस्य च हेतुं मत्वा समाजस्य सङ्कीर्णपुरातन-विचारधारासु प्रहारा: कृता:। डा. बिश्वालस्य 'वासुदेवस्य जन्मदिनम्'[93] इत्यस्यां कथायां, डा.नारायणदाशस्य 'श्रावणी'[94] इत्यत्र च कस्याश्चित् मातु: विवशता चित्रिताऽस्ति। एवंप्रकारेण नारीजीवनजगत: प्रकाशितानाम् अप्रकाशितानाञ्चेत्युभयेषां कोणानां क्षणानां चै एतासु कथासु स्थानं दृश्यते।

डा. बनमाली बिश्वालस्य 'बलिदानम्[95]', नलिनीशुक्लाया: 'यौतुकाभिशप्ता'[96], डा.प्रमोदकुमारनायकस्य 'पत्रम्'[97], प्रभुनाथद्विवेदिन: 'यौतुककौतुकम्'[98], सुकन्या[99], डा. नारायणदाशस्य 'कर्णपुष्पम्'[100], डा. राजेन्द्रमिश्रस्य 'जामाता'[101] इत्येतासु कथासु यौतुकसमस्याया: विविधरूपाणामङ्कनं द्रष्टुं शक्यते। 'बलिदानम्'[102] इति कथायां परिवारं प्रत्युत्तरदायित्वस्नेहभाव- निर्धानतायौतुकोत्पीडनादिभिश्चोत्पन्नस्य जीवनसंघर्षस्य करुण-व्यथा वर्णिताऽस्ति। गृहस्य चतुर्णा सदस्यानां भरणपोषणयोरुत्तरदायित्वं पितु: मरणानन्तरं लेखनपठनावस्थायां राजू 'गैरेज'- मध्ये कार्य कर्तुं विवशीकरोति। तस्य षोडपवर्षीयाया: भगिन्या: सुहासिन्या: विवाह: परेशेन सहाभवत्। यौतुकं नाम सामाजिकप्रतिष्ठाया: प्रश्न इति मन्यमानै: श्वसुरपक्षीयजनै: चत्वारिंशसत्हस्त्ररूप्यक- मूल्ययुतं 'हीरोहाण्डा' नामकं यानं याचते। अन्ततस्तद्व्यवस्थायामसत्यां सुहासिनी श्वसुरालये प्रताडिता भवति। व्यथितया सुहासिन्या लिखितं पत्रं यौतुकोत्पीडनस्य गम्भीरां स्थितिं व्यक्तीकरोति। पत्रं पठित्वा मातु: रोदनेन किंकर्तव्यविमुढ: राजू: 'गैरेजत:' सामान्यदोषनिवारणार्थम् आगतं कस्यचिद् ग्राहकस्य वाहनं नीत्वा भगिनीगृहं पलायते। वाहनं तत्रैव त्याक्त्वा स: आगत्य स्वेच्छया आरक्षिण: समक्षमात्मसमर्पणं करोति। यौतुकसमस्याया: कारणेनैव सुहासिनी प्रताडिता भवति। 'राजू:' च किशोरवयसि चौर्यापराधमाचरति। यौतुकप्रथया पीडिताया: कस्याश्चित् नववध्वा: व्यथायाश्चित्रणं कुर्वती कथा 'यौतुकाभिशप्ता'[104] डा.नलिनीशुक्लया विरचिताऽस्ति। अस्यां कथायां सुसज्जितस्य स्वर्णिमभविष्यस्य स्वप्नानि साकाराणि कर्तुं श्वसुरालगमागताया: वध्वा: यौतुकार्थम् अग्निना भस्मीकृत्य हत्या

क्रियते। अत्र नारीजीवनस्य मर्मान्तकवेदना साकारत्वं प्राप्नोति। डा. प्रमोदकुमारनायकस्य 'पत्रम्' इत्यस्यां कथायां यौतुकपीडितायाः कस्याश्चनात्यल्पशिक्षितायाः युवत्याः व्यथायाः परिप्रकाशः दृश्यते। नायिका मल्लिका श्वसुरालयेऽनेकानि दुःसहानि कष्टानि सह्यमानाऽन्ततः स्वमात्रे लिखिते पत्रे स्वीयाकथनीयव्यथायै मार्मिकाभिव्यक्तिं ददाति। पत्राचारसङ्केतस्थाने केवलं मातापितरौ विलिख्य पत्रपेटिकायां पातयति। प्रस्तुत-कथा मल्लिकाया अन्तहीनां व्यथां पूर्णसंवेदनाभिः प्रकटयितुं समर्थाऽस्ति। 'सुकन्या'[105] इत्यस्यां कथायां नायिकायाः सुकन्यायाः यौतुकसमस्याकारणाद् विवाहो न भवति अतः सा दुःखिता सती आत्महत्यामाध्यमेन प्राणपरित्यागाय प्रस्तुता भवति। किन्तु सौभाग्यवशादेवं कश्चन सज्जनः तस्याः रक्षां कृत्वाः गृहं प्रापयति। अन्ततः तेनैव युवकेन सह तस्याः विवाहोऽपि जायते।

अलौकिकदर्शकानां लौकिकपात्राणां च माध्यमेन गृहे गृहे वीथ्यां वीथ्यां च जायमानस्य यौतुकोत्पीडनस्य चित्रमुपस्थापयन्त्यां 'यौतुककौतुकम्' (डा. प्रभुनाथद्विवेदिनः) इत्यस्यां कथायां यौतुक-हत्याभिः चिन्तितौ श्रीनारदनारायणौ स्वर्देशं परित्यज्य समाजे जायमानानि यौतुक-जन्यानि नित्यनवीनानि कौतुकानि पश्यतः- **"प्रभो, यस्यां भुवि भवान् धर्मरक्षणायावतरति सैव मही यौतुकत्रासेनाधुना विक्षुब्धा वर्तते। असंख्याकाः कन्यकाः यौतुकदानवैः भृशं पीडिता नित्यमेव स्वप्राणाहुतं वितरन्ति। आर्यावर्ते भरतखण्डे शोणितपिपासिता यौतुकलीलापिशाचिनी नग्ना नृत्यति। यौतुकलिप्सया मानवास्तथा निष्ठुरमाचरन्ति यथा शोणितजिह्वः हिंसकाः पशवोऽपि नैव कुर्वन्ति। ये कन्यकानां पितरस्तेषां दुर्दशा त्वनिवर्चनीया।"**[106]

भगवान् विष्णुः नारदश्च यौतुकोत्पीडितानां सहायतां कुरुतः। तौ कुत्रचिद् कस्यचिद् धनिकस्य विशालप्रासादाङ्गणे प्रताडितायाः सुन्दरीयुवत्याः रक्षां कुरुतः, कुत्रचिच्च तौ नारीमेव नार्याः शत्रुमिति अनुभवन् तद् वर्णयंश्च अग्रेसरतः। कुत्रचिद् यौतुकलुब्धयोः वरपित्रोरनावश्यकधनयाचनेन पीडिताः कन्यापक्षीयाः वरं वरयात्रां च परावर्तयन्ति। कुत्रचिच्च निश्चित-धनराश्यभावेन वरस्य पिता स्वयं वरयात्रिभिः सह वरस्य प्रत्यावर्तनमादिशति। कुत्रचिद् भगवान् स्वयं यौतुकं दत्वा समस्यायाः समाधानं करोति। अत्र लेखकः साक्षाद् भगवता एतादृशं समाधानं कारयित्वा प्रकारान्तेरण यौतुकव्यवस्थायाः स्वीकृतिमेव ददातीति वक्तुं शक्यते। यतोहि यौतुकदानमपि यौतुकग्रहणवदपराधकोट्यामन्तर्भवति। कस्याञ्चिदपरस्यां कथायां पिता स्वभूमिं विक्रीय पर्याप्तयौतुकदानेन पुत्र्याः सुखं प्रत्याश्वस्तोऽस्ति। 'जामाता'[107] (डा. राजेन्द्रमिश्रस्य) इत्यस्यां कथायां पित्रा स्वकन्यायाः वन्दनायाः विवाहार्थम् आनीतानि द्विसहस्त्ररूप्यकाणि चौर्यैः लुण्ठितानि। तेन पिता अतीव दुःखी भवति। संयोगेन शोभनः शिक्षितश्च सर्वकारीयः कर्मचारी चन्द्रकान्तः वीरतापूर्वकं लुण्टाकेभ्यः धनं स्वीकृत्य कन्यापित्रे प्रयच्छति। सः विना यौतुकेन विवाहस्य प्रस्तावमपि प्रस्तौति। 'कर्णपुष्पम'[108] (डा. नारायणदाशस्य) इत्यस्यां कथायां मिता वाञ्छित-यौतुकाभावे श्वसुरालये श्वश्रुप्रेरितान्यनेकानि दुर्वाक्यानि श्रोतुं विवशा भवति। पदे पदे तया मानसिकी प्रताडना सह्यते। अत्र मातृपत्न्योर्मध्ये निष्पीडितस्य पुत्रस्य व्यथायै यथार्थस्वरः प्रदत्तः लेखकेन। एवं मिता वर्षत्रयपर्यन्तं मातृगृहे व्यतीय अन्ततः स्वमातुः आभूषणं विक्रीय यौतुकरूपं कर्णपुष्पं धारयित्वैव श्वसुरालयम् आगच्छति। अत्र लेखकः कथान्ते विशेषमार्मिकतामुत्पादयति। तस्य कर्णुपुष्पस्य दर्शनाय श्वश्वाः नेत्रेऽपि न स्तः। एतेन अन्धायाः श्वश्वाः व्यथा अपि सङ्केतिता।

वर्तमानकथासु उच्चवर्गीय-नारीणां परम्पराध्यः मोहभङ्गस्य स्वच्छन्दाचरणस्य तथा निम्नवर्गीय-नारीणाञ्च शोषणस्यानेकविधाङ्कनं कृतम्। स्वाधिकारार्थ स्वरमुत्थापयन्तीनां स्त्रीणां चित्रम् कन्याभ्रूणहत्यायाः तथा च मध्यवर्गीय-स्त्रीणां मनोवैज्ञानिक-परिवर्तनान्यपि यत्र तत्र कथासु वर्णितानि भवन्ति। 'वंशरक्षा'[109] (डा. बनमाली-बिश्वालस्य) इत्यस्यां कथायां कन्याभ्रूणहत्यायै पतिश्वश्रूभ्यां प्रेरितायाः पीडितायाश्च प्रभायाः मनोदशानामङ्कनेन सहैव नियत्याः न्यायपूर्णं विधानमपि रूपायितमस्ति। अन्ततः चिकित्सकः भविष्यत्काले प्रभायाः मातृशक्तिरहितां दशां सूचयित्वा प्रभायाः पतिं श्वश्रूं च पश्चात्तापगर्ते पातयति।

जयपुरस्थेन डा. नन्दकिशोरेण यौतुकेनाभिशप्ताः नैके जीवनक्षणाः स्थितयश्च स्वकथासंग्रहस्य 'यौतुकवर्तनम्'[110] इत्यस्यां कथायां वर्णिताः। अत्र वरपितुर्यौतुकलिप्सातुलायां वधूपक्षस्यार्थिकस्थितिः तोलयित्वा कथागतानि पात्राणि मनोविश्लेषणपूर्वकं प्रस्तूयन्ते।

विविध-सामाजिकपरिस्थितिषु नारीजीवनस्य नैकाः समस्याः विसङ्गतयो विडम्बनानि च तासामाशाऽऽकांक्षाभिः सह कथासु सूक्ष्मरूपेण व्यापकतया च अभिव्यक्तानि।

**सन्दर्भटिप्पण्यः**


1. ईक्षुगन्धा, डा.राजेन्द्रमिश्रः
2. तत्रैव
3. तत्रैव
4. तत्रैव
5. तत्रैव
6. तत्रैव
7. तत्रैव
8. तत्रैव
9. राङ्गडा, राजेन्द्रमिश्रः
10. तत्रैव
11. तत्रैव
12. तत्रैव
13. ईक्षुगन्धा, डा.राजेन्द्रमिश्रः
14. तत्रैव
15. भग्नपञ्जरम्, ईक्षुगन्धा, डा.राजेन्द्रमिश्रः
16. तत्रैव
17. तत्रैव
18. शतपर्विका, ईक्षुगन्धा, डा.राजेन्द्रमिश्रः
19. तत्रैव
20. तत्रैव
21. तत्रैव
22. तत्रैव
23. तत्रैव
24. पक्षपातैतः, सहपाठिनी, डा. प्रमोदभारतीयः
25. तत्रैव
26. तत्रैव
27. तत्रैव
28. तत्रैव
29. अंशकालिकपतिः, सहपाठिनी, डा. प्रमोदभारतीयः
30. सहपाठिनी, डा. प्रमोदभारतीयः
31. नीरवस्वनः, डा. बनमाली विश्वालः, पृ.1
32. तत्रैव
33. तत्रैव
34. तत्रैव
35. तत्रैव
36. तत्रैव, पृ.10
37. तत्रैव, पृ.20
38. तत्रैव, पृ.76
39. तत्रैव, पृ.102
40. तत्रैव, पृ.127
41. बुभुक्षा, डा. बनमाली विश्वालः, पृ.21
42. जिजीविषा, डा. बनमाली विश्वालः, पृ.32
43. तत्रैव, पृ.1
44. नीरवस्वनः, डा. बनमाली विश्वालः, पृ.1
45. तत्रैव, पृ.10
46. तत्रैव, पृ.20
47. तत्रैव, पृ.76
48. तत्रैव, पृ.127।
49. राङ्गडा, डा. राजेन्द्र मिश्रः, पृ.111
50. तत्रैव
51. छिन्नच्छाया, डा. रवीन्द्रकुमार पण्डा, पृ. 40
52. ऊर्मिचूडा, डा. केशवचन्द्र दाशः
53. तत्रैव
54. तत्रैव
55. तत्रैव
56. निम्नपृथिवी, डा. केशवचन्द्रदाशः पृ1
57. तत्रैव, पृ.2
58. तत्रैव, पृ.6

59. तत्रैव, पृ.46
60. तत्रैव, पृ.67
61. तत्रैव, पृ.69।
62. गङ्गे च यमुने चैव, डा.नारायणदाशः, पृ.1
63. नीरवस्वनः, डा. बनमाली विश्वालः पृ.1
64. निम्नपृथिवी, डा. केशवचन्द्रदाशः पृ1
65. तत्रैव, पृ.6
66. तत्रैव
67. गङ्गे च यमुने चैव, डा.नारायणदाशः, पृ.9।
68. तत्रैव, पृ.29
69. तत्रैव, पृ.45
70. तत्रैव, पृ.72
71. कथासप्ततिः, डा.प्रमोदकुमार नायकः, पृ.24
72. तत्रैव, पृ.45
73. तत्रैव, पृ.13
74. तत्रैव, पृ.3
75. तत्रैव, पृ.8
76. तत्रैव, पृ.34
77. तत्रैव, पृ.13
78. रूपाजीवा, कथासप्ततिः, डा.प्रमोदकुमार नायकः पृ.3
79. तत्रैव, पृ.34
80. तत्रैव, पृ.45
81. छिन्नच्छाया, डा. रवीन्द्रकुमार पण्डाः
82. तत्रैव
83. तत्रैव
84. तत्रैव
85. तत्रैव
86. तत्रैव
87. तत्रैव
88. तत्रैव
89. जञ्जालः, छिन्नच्छाया, डा. रवीन्द्रकुमार पण्डा, पृ.59
90. छिन्नच्छाया, डा. रवीन्द्रकुमार पण्डा
91. तत्रैव
92. गङ्गे च यमुने चैव, बुभुक्षा
93. बुभुक्षा, डा. बनमाली विश्वालः, पृ.24
94. गङ्गे च यमुने चैव, डा.नारायणदाशः,पृ. 43
95. बुभुक्षा, डा. बनमाली बिश्वालः, पृ. 68
96. कथासप्तकम्, डा. नलिनी शुक्ला
97. कथासप्ततिः, डा.प्रमोदकुमारनायकः, पृ.54
98. कथा कौमुदी, डा. प्रभुनाथ द्विवेदी, पृ. 47
99. तत्रैव
100. नीरवस्वनः, डा. बनमाली बिश्वालः, पृ.35
101. चित्रपर्णी, डा.राजेन्द्र मिश्रः
102. आषाढस्य प्रथमदिवसे, डा. प्रशस्यमित्रशास्त्री, पृ. 44
103. निम्नपृथिवी, डा. केशवचन्द्रदाशः पृ.69
104. माहेन्द्रलिपिः, निम्नपृथिवी, डा. केशवचन्द्रदाशः पृ.69-70
105. कथाकौमुदी, डा. प्रभुनाथ द्विवेदी, पृ. 31
106. कथाकौमुदी, डा. प्रभुनाथ द्विवेदी, पृ. 47
107. यौतुक-कौतुकम्, कथाकौमुदी, डा. प्रभुनाथद्विवेदी, पृ. 48
108. चित्रपर्णी, डा.राजेन्द्र मिश्रः
109. नीरस्वनः, डा. बनमाली बिश्वालः, पृ.35
110. जिजीविषा, डा. बनमाली बिश्वालः, पृ.62

## सन्दर्भग्रन्थसूची


1. बुभुक्षा, डा. बनमाली बिश्वालः, प्रका. पद्मजा प्रकाशन, 57-बसन्त विहार, झूसी, इलाहाबाद, 2001
2. नीरस्वनः, डा. बनमाली बिश्वाल, प्रका. पद्मजा प्रकाशन, 57-बसन्त विहार, झूसी, इलाहाबाद, 1998
3. छिन्नच्छाया, डा. रवीन्द्रकुमार पण्डा, प्रका. माणिक प्रकाशन, 13341/6, रेलवे कालोनी, अम्बाला छावनी, हरियाणा, 2005
4. निम्नपृथिवी, डा. केशवचन्द्रदाशः,

5. ऊर्मिचूडा, डा. केशवचन्द्र दाशः, प्रतिभा प्रकाशन, 29/5, शक्तिनगर, दिल्ली 1995
6. गङ्गे च यमुने चैव, डा. नारायणदाशः, प्रका. लोकभाषा प्रचार समिति, पुरी, 2001
7. सहपाठिनी, डा. प्रमोदभारतीयः, प्रका. माणिक प्रकाशन, 13341/6, रेलवे कालोनी, अम्बाला छावनी, हरियाणा, 1999
8. जिजीविषा, डा. बनमाली बिश्वालः, प्रका. पद्मजा प्रकाशन, 57-बसन्त विहार, झूसी, इलाहाबाद, 2006
9. कथासप्ततिः, डा. प्रमोदकुमार नायकः, प्रका. लोकभाषा प्रचार समिति, पुरी, 2003
10. कथासप्तकम्, डा. नलिनी शुक्ला
11. कथा कौमुदी, डा. प्रभुनाथ द्विवेदीः, प्रका. श्रुतिप्रकाश द्विवेदी, एस-12/40 पियरिया पोखरी, वाराणसी, 1988
12. चित्रपर्णी, डा.राजेन्द्र मिश्रः, वैजयन्त प्रकाशन, 8, बाघम्बरी, इलाहाबाद।
13. आषाढस्य प्रथमदिवसे, डा. प्रशस्यमित्रशास्त्रीः, अक्षयवट प्रकाशन, 26, बलरामपुर हाउस, इलाहाबाद।
14. ईक्षुगन्धा, डा. राजेन्द्रमिश्रः, वैजयन्त प्रकाशन, 8, बाघम्बरी, इलाहाबाद।

**डॉ0 अर्चना तिवारी**
*ग्रा.+पो. - कोरसम, जिला - फतेहपुर- 212665*



# आचार्य भरत : एक वास्तुशिल्पी

अरुण कुमार त्रिपाठी

*रङ्गमञ्च की व्यवस्था नाटक का अनिवार्य अङ्ग है। प्रेक्षागृह तथा नेपथ्यगृह की व्यवस्था भी रङ्गमञ्च का ही अभिन्न अङ्ग है। आचार्य भरत ने नाट्यशास्त्र में जहाँ नाटक विधा से सम्बद्ध समस्त पक्षों का विस्तृत वर्णन किया है वहीं नाटकमञ्चन के लिए अपेक्षित रङ्गमञ्च आदि के निर्माण से सम्बद्ध नियमों तथा विधियों का भी सविस्तार वर्णन किया है। इन विवरणों से यह स्पष्ट होता है कि आचार्य भरत को वास्तुशास्त्र सम्बन्धी गहन ज्ञान भी था। इस शोध-पत्र में आचार्य भरत द्वारा दिए गए मण्डपगृहों, प्रेक्षागृह, नेपथ्य तथा तत्सम्बन्धी अन्यान्य महत्त्वपूर्ण सन्दर्भों की विशद विवेचना की गई है तथा आधुनिक रङ्गमञ्चीय व्यवस्था से उसका साम्य तथा वैषम्य भी प्रतिपादित किया गया है-*

नाटक नेत्रों के माध्यम से हमारे हृदय में प्रवेश कर जाता है, तथा रङ्गमञ्च के ऊपर अभिनीत किये जाने पर ही आनन्द प्रदान करता है। इस प्रकार से नाटक का अभिनय करने के लिए सर्वप्रथम हमें रङ्गमञ्च की आवश्यकता होगी। जिस पर पात्रगण अभिनय करेंगे। पात्रों को तैयार होने के लिए नेपथ्यगृह एवं दर्शकों को बैठने के लिए प्रेक्षागृह की आवश्यकता होगी, जिसकी सहायता से वर्षा-धूप एवं नाटक के मञ्चन में व्यवधान पहुंचाने वालों से बचा जा सकेगा। आचार्य भरत को तो पहले ही नाटक में नाट्यगृह की आवश्यकता पड़ी थी। इसी को ध्यान में रखते हुए आचार्य भरतमुनि ने नाट्यशास्त्र के द्वितीय अध्याय में नाट्यगृह के प्रकार एवं उसके निर्माण की विधि को सविस्तार बतलाते हुए अपने वास्तुशास्त्रीय ज्ञान का परिचय दिया है-

**श्रूयतां तद्यथा तत्र[1] कर्तव्यो नाट्यमण्डपः।**
**तस्य वास्तु च पूजा च यथा योज्या प्रयत्नतः।।[2]**

अपने वास्तु सम्बन्धी ज्ञान को बताने के लिए आचार्य भरत ने सर्वप्रथम मापने के लिए दूरी की इकाईयों का प्रयोग किया है।[3] नाट्यशास्त्र द्वितीय अध्याय के प्रारम्भ में भरत-मुनि ने नौ (9) मात्रकों को बतलाया है, जिनमें अणु, रज, बाल, लिक्षा, यूका, यव, अङ्गुल, हस्त और दण्ड हैं।[4]

इसमें अणु सबसे छोटी इकाई तथा हस्त सर्वप्रमुख इकाई है।[5] जिस प्रकार आधुनिक इकाईयां 10 के गुणन फल में है उसी प्रकार भरतमुनि द्वारा बतायी गयी इकाइयाँ 8 के गुणनफल (या गुणक) होती हैं, इसमें बड़ी इकाई अपने छोटी इकाई का आठ गुना बड़ा होती है। यदि हम एक हाथ बराबर (=) 18 इन्च मान लें तो इन दोनों इकाइयों में सम्बन्ध बनाया जा सकेगा, जिसकी सहायता से हम आज भी उसे आसानी से समझ सकेंगे तथा भरतकालीन इकाईयां सामान्य जन के लिए भी सुग्राह्य होंगी।

**इकाइयों का परस्पर सम्बन्ध[6]**

यदि 1 हाथ = 18 इन्च (Inch.), तथा 1 इन्च = 25 मि.मी. तब
8 अणु = 1 रज = एक धूलकण

| | | | |
|---|---|---|---|
| 8 रज | = 1 वाल= 1 बाल के मोटाई के बराबर | | |
| 8 वाल | = 1 लिक्षा | = 3/1408 इन्च = 75/1408 मिलीमीटर | |
| 8 लिक्षा | = 1 यूका= 3/176 इन्च = 75/176 मि.मी. | | |
| 8 यूका | = 1 यव | = 3/32 इन्च = $2\frac{11}{32}$ मि.मी. | |
| 8 यव | = 1 अङ्गुल | = 3/4 इन्च = $18\frac{3}{4}$ मि.मी. | |
| (8×3) | = 24अङ्गुल | = 1 हाथ = 18 इन्च = 450 मि.मी. | |
| 4 हाथ | = 1 दण्ड= 6 फुट या 72 इन्च = 1800 मि.मी. | | |

उपर्युक्त मात्रकों के आधार पर आचार्य भरत ने नाट्यमण्डप का वर्णन द्वितीय अध्याय की कारिका 8 से 11 तक में किया है। कारिकाओं में वर्णित विधि के द्वारा हस्त परिमाण मानकर नव (9) प्रकार के मण्डप बनाये जा सकते हैं। उन्होंने 108 हाथ, 64 हाथ, 32 हाथ, 16 हाथ का प्रयोग किया है, जिन्हें सर्वप्रथम आधुनिक इकाई में परिवर्तन निम्नलिखित प्रकार से कर सकते हैं-

| | | | | | | |
|---|---|---|---|---|---|---|
| चूँकि | 1 | हाथ | = 18 | इन्च | | |
| इसलिए | 108 | हाथ | = 1944 | इन्च | = 162 | फुट |
| | 64 | हाथ | = 1152 | इन्च | = 96 | फुट |
| | 32 | हाथ | = 576 | इन्च | = 48 | फुट |
| | 16 | हाथ | = 288 | इन्च | = 24 | फुट |

उपर्युक्त परिमाणों के आधार पर आचार्य भरत ने आयताकार, वर्गाकार, समत्रिभुजाकार तथा प्रत्येक को मध्यम, अवर और ज्येष्ठ प्रकार का बताया गया है, जो निम्न सारणी से स्पष्ट हो जाता है-

## मण्डपगृहों के प्रकार एवं उनके परिमाण[7]

| आकार | प्रकार | परिमाण | | उपयोग |
|---|---|---|---|---|
| | | हाथ | फुट (Feet) | |
| विकृष्ट | ज्येष्ठ | 108 × 64 | 162 × 96 | देवताहेतु |
| (आयताकार) | मध्यम | 64 × 32 | 96 × 48 राजाहेतु | |
| | अवर | 36 | 48 × 24 | सामान्यजनहेतु |
| चतुरस्त्र | ज्येष्ठ | 108 x 108 | 162 x 162 | देवताहेतु |
| (वर्गाकार) | मध्यम | 64 x 64 | 96 x 96 | राजाहेतु |
| | अवर | 32 x 32 | 48 x 48 | सामान्यहेतु |
| त्र्यस्त्र | ज्येष्ठ | 108 | 162 | देवताहेतु |
| (समत्रिभुजाकार) | मध्यम | 64 | 96 | राजाहेतु |
| | अवर | 32 | 48 | सामान्यहेतु |

आचार्य भरत ने उपर्युक्त 9 (नव) प्रकार के मण्डपगृहों का विभाजन करने के पश्चात् मण्डपगृहों के निर्माणहेतु भूमि का चयन किस प्रकार किया जाय इसका वर्णन किया है। उनका कहना है कि "जो भूमि समतल, मजबूत, ठोस, काली अथवा पीली हो उसी स्थान पर नाट्य-मण्डप बनवाना चाहिए।"[8] इस प्रकार की भूमि को सर्वप्रथम साफ करके हल से जोतें और हड्डी, कील, कपालादि और घास-फूस एवं झाड़-झंखाड़ आदि को उसमें से निकाल दें। तत्पश्चात् पृथ्वी का शोधन करके परिमाण का निश्चय करें तथा परिमाण के मापन के लिए पुण्य नक्षत्र का योग होनेपर सूत डाले।[9] इस प्रकार भूमि के शोधन के पश्चात् विभिन्न प्रकार के मण्डपों को बनाना चाहिए।

आयताकार (विकृष्ट) मण्डप बनाने के लिए सर्वप्रथम चौंसठ हाथ (96 Feet) लम्बा मध्यम प्रकार का मण्डप लेते हैं। इस प्रकार से इस 64 × 32 (96 × 48 Feet) के मण्डप को लेकर लम्बाई वाले हिस्से को आधा कर लेते हैं। आधा करने के बाद वह 32 × 32 हाथ के दो भागों में बँट जाता है। पुनः पीछे के बचे भाग को लम्बाई के तरफ से आधा करने पर 16 × 32 के दो भाग बच जाते हैं। अब इन दोनों भागों में से आगे वाले को रङ्गशीर्ष तथा पीछे वाले को नेपथ्यगृह कहना चाहिए (द्रष्टव्य चित्र संख्या-1)[10]। इसी प्रकार से वर्गाकार तथा त्रिभुजाकार मण्डप को भी बनाना चाहिए (द्रष्टव्य चित्र संध्या 2 एवं 3)। आचार्य भरत तथा अभिनवगुप्त दोनों ने सर्वप्रथम आयताकार मण्डप का ही वर्णन किया है, इससे ऐसा प्रतीत होता है कि इन लोगों ने इसी मण्डप को ही श्रेष्ठ माना होगा। आज भी इसी प्रकार के मण्डप प्रचलन में अधिक हैं।

आचार्य भरत द्वारा बताये गये इस मण्डप को लेकर विद्वानों में मतभेद है। श्री मनमोहन घोष[11] ने दो बातों पर अपना मतभेद प्रकट किया। पहली बात यह थी कि रङ्गपीठ और रङ्गशीर्ष दो नहीं हैं वरन् एक ही स्थान के वाचक पर्याय हैं और दूसरा यह है कि प्रेक्षकों को बैठने के लिए आधे नहीं वरन् तीन चौथाई भाग होनी चाहिए तथा एव चौथाई भाग में नेपथ्यगृह एवं रङ्गपीठ की रचना होनी चाहिए। पहली बात को सिद्ध करने के लिए घोष महोदय ने पाँच प्रमाण रखे-

1. प्रथम अध्याय में ब्रह्म ने नाट्यमण्डप के विभिन्न स्थानों की रक्षा की जो व्यवस्था की थी उसमें 'रङ्गशीर्ष' का कोई उल्लेख नहीं किया गया है।[12]

2. द्वितीय अध्याय के श्लोक 32-33 में नाट्यमण्डप के विभिन्न भागों का निर्देश किया गया है किन्तु यहाँ भी 'रङ्गपीठ' का कोई उल्लेख नहीं है।

3. द्वितीय अध्याय के श्लोक 72, 73 और 75 में केवल 'रङ्गशीर्ष' का ही उल्लेख है।

4. त्यस्त्र रङ्गमण्डप की रचना में द्वितीय अध्याय के 102, 103 और 104 श्लोकों में केवल रङ्गपीठ का उल्लेख किया गया है।

5. द्वितीय अध्याय की श्लोक संख्या 88 से 101 तक चार स्थानों पर स्पष्ट रूप से रङ्गशीर्ष का उल्लेख है। केवल एक स्थान पर रङ्गपीठ का उल्लेख है।

घोष की उपर्युक्त बातों की प्रत्यालोचना करते हुए डा. मनकद ने द्वितीय अध्याय के 100वें तथा 68वें श्लोक को लेते हुए कहा कि 100वें श्लोक में समुन्नत तथा सम दो प्रकार के रङ्गशीर्षों की चर्चा करते हुए विकृष्ट मण्डप में समुन्नत तथा चतुरस्र मण्डप में सम रङ्गशीर्ष के बनाने का विधान किया गया है। यहाँ किसकी अपेक्षा समुन्नत अर्थात् अधिक ऊँचा रङ्गशीर्ष बनाना चाहिए जिज्ञासा होती है उसकी निवृत्ति रङ्गपीठ के द्वारा होती है। इसके अतिरिक्त 68वें श्लोक में रङ्गशीर्ष तथा रङ्गपीठ का अलग-अलग

उल्लेख किया गया है।[13] इनके अतिरिक्त डा. राघवन महोदय ने भी अभिनवभारत के विविध उद्धरणों के द्वारा रङ्गशीर्ष और रङ्गपीठ को अलग-अलग सिद्ध करने का यत्न किया है। किन्तु सभी मतों में हमें डा. नगेन्द्र का मत उचित प्रतीत होता है। डा. नगेन्द्र[14] का कहना है कि यह समस्या पाठ भेद के कारण पैदा हुई जहाँ 34वें श्लोक में रङ्गशीर्षे की जगह रङ्गशीर्ष एकवचनान्त शब्द छप गया है। अत: रङ्गपीठ एवं रङ्गशीर्ष दो अलग-अलग स्थान हैं।

आचार्य भरत ने रङ्गपीठ के दोनों ओर मत्तवारणी[15] बनाने को कहा है। मत्तवारणी की समस्या नाट्यशास्त्र की सबसे जटिल और महत्त्वपूर्ण समस्या है। अभिनवगुप्त से लेकर आधुनिक काल के विद्वान् डा. मनकद, प्रो. सुब्बाराव, प्रो. भानु तथा कु. गोदावरी केतकर ने इसके विषय में विचार कर तथ्य निर्णय करने का यत्न किया है, किन्तु वे किसी ठीक परिणाम पर नहीं पहुँच सके हैं। मत्तवारणी की सारी जटिलता का कारण मूल नाट्यशास्त्र का प्राचीन संस्करणों में पाये जाने वाला 'रङ्गपीठस्य पार्श्वे तु कर्तव्या मत्तवारिणी' यह पाठ ही है। किसी प्रारम्भिक लिपिकार ने प्रमाद से 'कर्तव्यौ मत्तवारणौ' के स्थान पर 'कर्तव्या मत्तवारणी' पाठ मूल में आ गया और इससे ही सारी समस्यायें उत्पन्न हो गयीं कोश में मत्तवारणी शब्द का अर्थ बरामदा है।[16] शब्द कल्पद्रुम में 'मत्तंवारयतीति मत्तवारण:' यह व्युत्पत्ति करके 'प्रसादवीथीनां वरण्ड:' यह मत्तवारणशब्द का अर्थ किया है। मत्तवारणीशब्द नाट्यशास्त्र के अतिरिक्त कहीं और प्राप्त नहीं होता है। अन्य सभी स्थानों पर मत्तवारण ही पाया जाता है। अभिनवगुप्त ने भी मत्तवारणी ही माना है। मत्तवारणी की स्थिति बताते हुए अभिनवगुप्त ने कहा है, कि रङ्गपीठ के दोनों ओर मत्तवारणियों या वरण्डों की रचना होनी चाहिए (द्रष्टव्य चित्र 4 एवं चित्र 5)। यह मत्तवारणी आयताकार और वर्गाकार भेद से दो प्रकार की होती है। वर्गाकार मत्तवारणी 8 × 8 हाथ की तथा आयताकार मत्तवारणी 16 × 8 हाथ की होगी। डा. मनमोहन घोष, डा. मनकद ने मुख्य मण्डप के भीतर ही मत्तवारणी बनाने का यत्न किया है। प्रो. सुब्बाराव ने एक ही मत्तवारणी का प्रतिपादन किया है। उन्होंने 'मत्तानां वारणानां श्रेणि: मत्तवारणी' यह मत्तवारणी शब्द का अर्थ किया है और रङ्गपीठ के सामने की ओर धरातल से एक हाथ उठे हुए भाग की दीवार पर जो प्लास्टर किया जाय, उसमें मत्त हाथियों के चित्र बनाये जाएँ। यह प्लास्टर में बनी हुई मत्तहाथियों की पंक्ति की मत्तवारणी है।[17] प्रो. भानु का मत है कि 'मत्तों का वारण करने वाली' मत्तवारणी होती है।[18] उनका कहना है कि नाटक को देखते समय किसी अत्यन्त भावपूर्ण दृश्य को देखकर कभी-कभी प्रेक्षकों में कुछ व्यक्ति उन्मत्त हो उठते हैं वे उग्र भावावेश में मञ्च पर अभिनय करने वाले पात्रों के पास पहुँचना चाहते हैं। इन लोगों को रोकने की दृष्टि से रङ्गपीठ के सामने की ओर छोटी-छोटी दीवार या कटहरा आदि लगा देना आवश्यक है। इस रोक के कारण मञ्च पर जाने के लिए उतावले मत्त लोगों का वारण हो जाता है, इसलिए उस रोक को ही मत्तवारणी कहते हैं मेरा मत है कि यदि इन सभी विद्वानों के मतों को मिला दिया जाय तो मत्तवारणी शब्द की सार्थकता सिद्ध हो जायेगी एवं आधुनिक समय में इसका उपयोग भी किया जा सकेगा। इस प्रकार से रङ्गपीठ पर आने के लिए बगल के दो बरण्डे और दर्शकों को रङ्गपीठ पर आने से रोकेन के लिए ऊँचाई वाले भाग में छोटी दीवार पर हाथियों का सुन्दर चित्र छपा होना चाहिए, यह सब मत्तवारणी के ही अन्तर्गत आ जाएगा (द्रष्टव्य चित्र-7)। पुनः आचार्य भरत ने यह भी स्पष्ट किया है कि मत्तवारणी डेढ़ हाथ (27 Inch)की ऊँचाई की बनानी चाहिए एवं उन दोनों मत्तवारणियों के ऊँचाई का ही रङ्गपीठ भी होना चाहिए।[19] अर्थात् मत्तवारणी तथा रङ्गपीठ दोनों की ऊँचाई पृथ्वीतल से 27 इन्च ऊँचा होना चाहिए। इसको ऊँचा उठाने के लिए घास-फूस, ईंट-पत्थर से रहित काली मिट्टी का ही प्रयोग करना चाहिए।[20]

नाट्यमण्डप की रचना में सर्वप्रमुख स्थान रङ्गपीठ का है। सारा अभिनय इस रङ्गपीठ पर ही अभिनीत होता है तथा यह प्रेक्षक गृह में बैठे प्रत्येक व्यक्ति की दृष्टि का केन्द्र होता है। यद्यपि आचार्य भरत ने रङ्गपीठ को ऊँचा बनाने को कहा है, किन्तु फिर भी पाठ भेद के कारण विद्वानों में इसको लेकर मतैक्य नहीं है। पहला विवाद रङ्गपीठ को प्रेक्षकों के बैठने के स्थान से ऊँचा रखा जाय या नीचा, यह है। इस पर प्रो. डी. आर. मनकद और डा. मनमोहन घोष का मत है कि इसे प्रक्षकों के बैठने के स्थान से नीचा रखना चाहिए। यह समस्या पैदा होने का कारण द्वितीय अध्याय के 64वें श्लोक का 'रङ्गमण्डपम्' शब्द है।[21] यह मुख्यतः दो अर्थों में प्रयुक्त होता है। कभी रङ्गमण्डपम् सारे नाट्यमण्डप का वाचक होता है। कभी सामाजिकों के बैठने के स्थान के लिए प्रयुक्त होता है। यदि इसका दूसरा अर्थ लिया जाय तब डा. घोष तथा प्रो. मनकद की बात सिद्ध हो जाती है। किन्तु इन विद्वानों ने आचार्य भरत के 69 श्लोक को ध्यान नहीं दिया जिसमें रङ्गपीठ को ऊँचा करने के लिए काली मिट्टी लाने के लिए कहा गया है। इतना ही नहीं पाश्चात्य विद्वानों के मत में यह दोष है कि वे केवल प्रेक्षकोपवेश से रङ्गपीठ को नीचा करने की ही नहीं अपितु नेपथ्यगृह की अपेक्षा भी रङ्गपीठ को नीचा मानते हैं। केवल डा. बेबर ही ऐसे व्यक्ति हैं जो नेपथ्यगृह की अपेक्षा रङ्गपीठ को ऊँचा मानते हैं। पाश्चात्य विद्वानों की भ्रामक धारणा का मुख्यतः दो कारण हैं-

1. नेपथ्य शब्द का निर्वचन 'नि-पत्र' धातु से करते हैं, अर्थात् जिससे नीचे की ओर उतरा जाय वह नेपथ्य है। नेपथ्य गृह से रङ्गपीठ पर ही आया जाता है, इसलिए नेपथ्यगृह को रङ्गपीठ से ऊँचा होना चाहिए अर्थात् रङ्गपीठ नीचा होना चाहिए।

2. नाटकों में प्रयुक्त होने वाले 'रङ्गावतरण' शब्द का अर्थ लेते हैं कि रङ्गपीठ पर नेपथ्य से उतरना होता है इसलिए रङ्गपीठ को नीचा बनाते हैं।

किन्तु पाश्चात्त्य विद्वानों के मत समीचीन प्रतीत नहीं होते हैं, क्योंकि अमरकोष के टीकाकार भानुजिदीक्षित ने 'नेत्रस्य नेतुर्वा पथ्यं नेपथ्यम्' यह नेपथ्य शब्द का निर्वचन किया है। अवतरण शब्द के आधार पर थोड़ा सा नीचा माना जा सकता है, लेकिन रङ्गशीर्ष की तुलना में ना कि प्रेक्षक गृह के।[22] इसे अभिनवगुप्त ने भी माना है। इसीलिए उन्होंने रङ्गशीर्ष को चित्त सोये हुए पुरुष के शिर के समान माना है। स्वयं भरतमुनि ने भी विकृष्ट मण्डप में रङ्गशीर्ष को रङ्गपीठ की अपेक्षा कुछ उन्नत बतलाया है।[23] इसलिए नेपथ्यगृह भी रङ्गपीठ से कुछ ऊँचा हो सकता है। आज भी भरतमुनि के विचारों का ही अनुकरण किया जाता है। प्रायः भारतीय रङ्गपीठ (Stage), प्रेक्षकगृह (Auditorium) एवं नेपथ्यगृह (Green Room) से ऊँचा ही होता है। रङ्गपीठ के ऊँचा होने से दर्शकगण को अभिनय आसानी से दिखाई पड़ता है, अन्यथा प्रेक्षकगृह में पीछे बैठे व्यक्ति उसे देख नहीं पायेंगे। जहाँ तक नेपथ्य गृह का सवाल है आज उसे पीछे की तरफ ही बनाया जाता है, इससे पात्रों को रङ्गपीठ पर आने में सुविधा भी होती है। उपर्युक्त के आधार पर नाट्यमण्डप इलाहाबाद में देखे जा सकते हैं उत्तरमध्य सांस्कृतिक केन्द्र एवं संगीतसमिति के नाट्यमण्डप भरतमुनि के अनुसार ही बना है, किन्तु राजर्षिमण्डपम् का नाट्यमण्डप भरतमुनि एवं पाश्चात्य नाट्यमण्डपों का मिश्रण प्रतीत होता है।

आचार्य भरत के अनुसार षड्दारूक(छह काष्ट खण्डे) से युक्त रङ्गशीर्ष की रचना करनी चाहिए और उसमें नेपथ्यगृह के दो द्वार बनाने चाहिए।[24] इस छः सुन्दर लकड़ी को किस प्रकार से लगाया जाय इस पर अनेक विद्वानों ने अपना-अपना मत प्रस्तुत किया है। स्वयं अभिनवगुप्त ने ही इसकी तीन तरह से व्याख्या किया है, जिसे डॉ. नगेन्द्र ने अपने अभिनव भारत में चित्र के माध्यम से भी प्रस्तुत किया है।[25] (द्रष्टव्य चित्र-8) अभिनवगुप्त का पहला मत यह है कि नेपथ्य गृह की भित्ति के सामने एक दूसरे से आठ हाथ

के अन्तराल पर स्थित दो स्तम्भों को उनके मुख्यादि की अपेक्षा से चार हाथ के अन्तर पर और दो खम्भे तथा उनके ऊपर-नीचे की दो लकड़ियाँ मिला कर छह काष्ठ खण्ड होते हैं। जिसमें छह दारू हों वह 'षड्दारूक' कहलाता है। जो विचित्र रचना से युक्त होना चाहिए।[26]

2. अभिनवगुप्त का दूसरा मत है कि दोनों किनारों के दो खम्भों, उनके ऊपर तथा नीचे की दो लकड़ियों और उनके बीच के दो खम्भों से युक्त तिहरीं षड्दारूक कहलाती है।[27]

3. तीसरी व्याख्या में अभिनवगुप्त ने प्रत्येक काष्ठ का नामकरण कर दिया है।[28]

1. 'ऊह' अर्थात् स्तम्भ के ऊपर के सिरे से निकला हुआ काष्ठ।

2. 'प्रत्यूह' अर्थात् उससे आगे निकली हुई तुला।

3. 'निर्यूह' अर्थात् तुला के किनारे से निकले हुए तख्तों की दीवार।

4. 'संजवन' अर्थात् भित्ति के समान आकाश में निकले हुए तख्ते।

5. खम्भों पर बने हुए सिंह आदि और सांप या हाथी आदि 'अनुबन्ध'।

6. 'कुहर' अर्थात् तख्तों के ऊपर खुदे हुए पर्वत नगरों की कुञ्जें तथा गह्वर आदि रूप से षड्दारूक हैं।

प्रो. डी. सुब्वा राव ने भी षड्दारूक की कल्पना की है।[2929]

प्रो. डी. सुब्बा राव का थियेटर सम्बन्धी लेख, नाट्यशास्त्र ऑफ भरतमुनि, ओ. इ. बड़ोदरा, सं. उनके अनुसार चौखट के चारों ओर की चार लकड़ियाँ और उनके कोनों को मिलाती हुई दो लकड़ियाँ ये सब मिलकर छः काष्ठ खण्ड हो जाते हैं। (द्रष्टव्य चित्र-9) इस प्रकार से काष्ठ खण्डों की स्थिति जानने के बाद आचार्य भरत ने दारूकर्म अर्थात् रङ्गशीर्ष के ऊपर की जाने वाली लकड़ी की कारीगरी के विषय में बताया है।[30] सभी व्याख्याओं में आचार्य भरत की सत्यता के पास कोई भी नहीं पहुँच पाया है। इसमें सभी को दिग्भ्रमित करने का कार्य अभिनवगुप्त की तीनों व्याख्याओं ने किया है। वास्तव में आचार्य भरत ने छह दारू का प्रयोग आगे आने वाले श्लोक 75 से 78 में होने वाले दारूकर्म के लिए बताया था। अर्थात् रङ्गशीर्ष को सजाने के लिए जो ऊह, प्रत्यूह से युक्त नाना प्रकार की कारीगरी से समन्वित भित्ति के समान प्रतीत होने वाले अनेक तखतों से विभूषित, अनेक सर्प से, नाना प्रकार की जालियों एवं झरोखों से युक्त जो दारुकर्म करने के लिए भरतमुनि ने बताया है, उन्हीं को बनाने के लिए ही छह प्रकार की लकड़ियाँ प्रयोग में लानी होती है, इन्हें ही षड्दारूक कहते हैं। अभिनव गुप्त का तीसरा मत इसके कुछ नजदीक पहुँचता है। किन्तु इसके आधार पर डॉ. नरेन्द्र द्वारा बनाया गया चित्र निरर्थक प्रतीत होता है।

आचार्य भरत का कहना है कि चारों तरफ से मण्डप में भित्ति बनानी चाहिए जिससे निर्वात बना रहे तथा भित्ति बन जाने के पश्चात् बाहर की ओर से लेप करायें तथा बाहर की ओर सफेदी कराना चाहिए तथा चिकना हो जाने पर उस पर चित्र रचना करवानी चाहिए।[31] इन दीवारों पर किस तरह का चित्र बनाया जाय इसको भी स्पष्ट करते हुए आचार्य भरत कहते हैं कि चित्र रचना में पुरूष और स्त्रियों का चित्र लताबन्ध तथा अपने योग-विलास की रूचि के अनुसार चरित्रों का चित्रण करवाना चाहिए।[32] इस प्रकार से मण्डप की दीवारें भी सजी-धजी होनी चाहिए।

अन्त में आचार्य भरत मण्डप के अन्दर लगने वाले खम्भों की व्यवस्था के बारे में कहते हैं। चूँकि आचार्य भरत ने चतुरस्त मण्डप में खम्भों की व्यवस्था सुन्दर तरह से बताया है इसलिए हम चतुरस्रमण्डप

Scale 1 Cm = 8 Hands

1. आयताकार (विकृष्ट) मण्डप




(चित्र सं.-1)

2. वर्गाकार मण्डप




(चित्र सं.-2)

3. त्रिभुजाकार मण्डप




(चित्र सं.-3)




(चित्र सं.-4)

Scale 1½ cm = 8 Hands

5. आयताकार मत्तवारणी (अभिनवगुप्त का मत)




(चित्र सं.-5)

6. आयताकार नाट्यमण्डप मत्तवारणीसहित (हमारा अपनामत)




(चित्र सं.-6)

Scale 2 Hand = 3cm

7. रङ्गपीठ सहित मत्तवारणी (हमारा अपना मत)




Note (1) रेखांकित भाग मत्तवारणी को दर्शाता है।
(2) 1½ हाथ – रंगपीठ की ऊँचाई

(चित्र सं.–7)

# रङ्गशीर्षपर षड्दारुकं की तीन स्थितियां




अभिनवगुप्त के तीन षड्दारुक (चित्र संख्या - 8)

**श्री सुब्बाराव द्वारा प्रस्तुत**

**षड्दारुकका चित्र**



चतुरस्र मण्डप में खम्भों की व्यवस्था (हमारा अपना मत)
Scale 1 Hand = 18 Inch ⇒ 32 Hands = 48 feet




(चित्र सं. 10)

स्तम्भ नं. 1 से 10 तक गोला (O) से प्रदर्शित (खम्भों के बीच की दूरी=1:
स्तम्भ नं. 1 से 8 तक वर्ग (□) से प्रदर्शित (खम्भों के बीच की दूरी = (
स्तम्भ नं. 1 से 6 तक त्रिभुज (Δ) से प्रदर्शित (खम्भों के बीच की दूरी=

में ही खम्भों की चर्चा करेंगे। आचार्य भरत के अनुसार चतुरस्र मण्डप (32 × 32 हाथ) में खम्भों की व्यवस्था बताते हुए कहा कि भीतर की ओर मत्तवारणी सहित रङ्गपीठ पर अर्थात् रङ्गपीठ के समीप मण्डप को धारण करने में समर्थ दस खम्भें प्रयोक्ताओं को खड़े करने चाहिए।[33] इस सन्दर्भ में शङ्कुक तथा भट्टलोल्लट एवं भट्टतोत के मत को तो अभिनवगुप्त ने स्वयं उल्लेख किया है। दश स्तम्भों की व्यवस्था तो शङ्कुक एवं भट्टलोल्लट दोनों ने एक ही प्रकार से की है इसमें 9वाँ एवं 10वाँ खम्भा भरतमुनि से भिन्न है।[34] अर्थात् भरतमुनि ने इसे रङ्गशीर्ष एवं मत्तवारणी में इन खम्भों को लगाने को कहा है। किन्तु वार्तिककार का इसके अनुकूल है।[35] भट्टतोत का मत तो बिल्कुल ही भिन्न है।[36] पुनः भरतमुनि ने छः और खम्भों को लगाने की बात कहा है।[37] इसके अतिरिक्त आठ स्तम्भ और भी लगाने की बात आचार्य भरत ने किया है।[38] उपर्युक्त सभी मतों का अध्ययन करने के पश्चात् हम इस निष्कर्ष पर पहुँचे हैं कि 1 से 10 तक के खम्भों को 3 हाथ (12 फुट) की दूरी पर रख कर रङ्गशीर्ष, रङ्गपीठ, मत्तवारणी, तथा नेपथ्य गृह को आधार दिया गया है। इसके अतिरिक्त 1-6 प्रकार के खम्भों तथा 1-8 प्रकार के अलग तरह के खम्भों की आवश्यकतानुसार हमने चित्र में सुसज्जित करने का प्रयास किया है। (द्रष्टव्य चित्र सं.-10)।

इस प्रकार से आचार्य भरत ने नाट्यशास्त्र में अपने वास्तु सम्बन्धी ज्ञान का प्रयोग करते हुए नाट्यमण्डप बनाने की विधि प्रस्तुत की है। समय एवं संस्कृतियों में इतना परिवर्तन के बावजूद आज भी रङ्मञ्च लगभग नाट्यशास्त्र के अनुसार ही बनते हैं। इस प्रकार से नाट्यशास्त्र में वर्णित वास्तु शिल्प की प्राषंगिकता आज भी है, कमी है तो उसे नये विचारो में ढालने की तथा उसे आधुनिक लोगों के अनुकूल एवं सुग्राह्य बनाने की। प्रस्तुत लेख इसी लक्ष्य को प्राप्त करने की एक सीढ़ी है। इसके माध्यम से प्राचीन कला को आधुनिक कला से सामंजस्य बैठाते हुए प्रयोग के योग्य बनाया गया है। इसीलिए प्रस्तुत शोध पत्र आज के लोगों के लिए एक नवप्रकाश रूप होगा। आचार्य भरत को प्रायः नाटक के विषय रसादि से जोड़कर ही अध्ययन किया गया है, किन्तु प्रस्तुत लेख में आचार्य भरत के वास्तुशास्त्रीय ज्ञान को भी प्रकाश में लाने का प्रयास किया गया है। प्राचीन विद्वानों के मतों को आधुनिक युग में प्रासंगिक बनाये रखने के लिए उनके ज्ञान को जानने की आवश्यकता है। तभी हम लोग प्राचीन विचारों से लाभ प्राप्त कर पायेंगे।

### सन्दर्भटिप्पणी

1. कुछ पुस्तकों में 'तत्र' की जगह 'यत्र' प्राप्त होता है।
2. नाट्यशास्त्र-भरतमुनि, सम्पा.-डा. के कृष्णमूर्ति, ओरियण्टल, इन्स्टीट्यूट, बड़ोदरा से प्रकाशित, संस्करण-1992, अध्याय-2, कारिका-6
3. आचार्य भरत के गणितीय ज्ञान का वर्णन 'हिन्दुस्तानी' के अङ्क-4 वर्ष 2006 में मेरे ही लेख में छपा है। आवश्यक होने के कारण उसकी कुछ पंक्तियां यहाँ भी ली गयी हैं।
4. अणू रजश्च वालश्च लिक्षा यूका यवस्तथा।
   अङ्गुलं च तथा हस्तो दण्डश्चैव प्रकीर्तितः।। नाट्यशास्त्र 2/13
5. प्रमाणमेज़ां निर्दिष्टं हस्तदण्डसमाश्रयम्। - नाट्यशास्त्र 2/9
6. नाट्यशास्त्र-भरतमुनि, अध्याय-2, कारिका 14 से 16 तक
7. वही, 8-11
8. समा स्थिरा तु कठिना कृष्णा गौरी च या भवेत्।
   भूमिस्तत्रैव कर्तव्यः कर्तृभिर्नाट्यमण्डपः।। नाट्यशास्त्र-भरत, प्रका.-बड़ोदरा, 2/25

9. वही, 2/26-24
10. वही, 2/33-35
11. डा. मनमोहन घोष ने सन् 1933 के 'इंडियन हिस्टारिकल क्वार्टरली' पृष्ठ 591 पर छपे एक लेख के द्वारा इसी पत्रिका में छपे 1932 के तृतीय अङ्क में प्रो. डी. आर. मनकद के लेख की आलोचना करते हुए नाट्यशास्त्र पर प्रकाश डाला था।
12. जबकि 'रङ्गपीठ की दो बार चर्चा प्रथम अध्याय के श्लोक संख्या 90-95 में की गयी हैं।
13. प्रो. डी. आर. मनकद ने यह प्रत्यालोचना 'इण्डियन हिस्टारिकल क्वार्टरली' के 1933 के अङ्क में पृष्ठ 973 से 977 में की थी।
14. हिन्दी अभिनवभारती, सम्पा.-डॉ. नगेन्द्र, दिल्ली वि.वि. सं.-1973, पृष्ठ 289-290
15. रङ्गपीठस्य पार्श्वे तु कर्तव्या मत्तवारणी। नाट्य.-2/63
16. संस्कृत हिन्दी कोश-वामन शिवराज आप्टे, न्यू भारतीय बुक कार्पोरेशन दिल्ली, सं. 1998, (मुद्+क्त+वारणम्)
17. प्रो. डी. सुब्बा राव बड़ौदा विश्वविद्यालय में डीन थे। इन्होंने मत्तवारणी की समस्या का समाधान 'नाट्यशास्त्र आफ भरतमुनि', प्रका.-ओरियन्टल इन्स्टीट्यूट वड़ोदरा, संस्करण-1992 के पृष्ठ 437 पर किया है।
18. प्रो. भानु ने भरत के नाट्यशास्त्र का मराठी भाषा में अनुवाद किया है। उसी में इन्होंने मत्तवारणी की व्याख्या की है।
19. नाट्यशास्त्र-भरतमुनि, अध्याय-2, कारिका 64
20. वही, कारिका 69
21. नाट्यशास्त्र द्वितीय अध्याय के 64वें श्लोक के द्वितीय पंक्ति में 6 उत्सेधेन तयोस्तुल्यं कर्तव्यं रङ्गपीठम्' में रङ्गपीठकम् की जगह पर कुछ प्राचीन लिपि कारों ने 'रङ्गमण्डपम्' लिख दिया है।
22. हिन्दी अभिनव भारत, सम्पा.-डॉ. नगेन्द्र, दि.वि.वि. पृष्ठ 322
23. नाट्यशास्त्र-भरतमुनि, अध्याय-2, कारिका-100
24. वही, कारिका 68
25. हिन्दी अभिनवभारती, सं.-डॉ. नगेन्द्र प्रकाशक - दिल्ली वि.वि., सं.-1973, पृष्ठ 326
26. वही, पृ. 324
27. वही,
28. वही, पृ. 325
29. 1992, पृष्ठ-447
30. नाट्यशास्त्र-भरतमुनि, अध्याय-2, कारिका 75 से 78 तक
31. वही, कारिका 81 से 83 तक
32. वही, 2/84
33. वही, 2/89
34. अभिनवभारती, सं. डॉ. नगेन्द्र, दि. वि. वि., पृष्ठ 348 एवं 351
35. वही, पृ. 355
36. वही, पृ. 365
37. नाट्यशास्त्र-भरतमुनि-2/92
38. वही, 2/93

## सन्दर्भग्रन्थसूची


1. नाट्यशास्त्र-भरतमुनि, सम्पा. डॉ. के कृष्णमूर्ति, प्रकाशक-ओरियण्टल इन्स्टीट्यूट बडौदरा, संस्करण - 1992
2. इण्डियन हिस्टारिकलक्वार्टरली, सं., नरेन्द्र नाथ लॉ, प्रकाशक-कॉक्सन पब्लिकेशन दिल्ली, संस्करण - 1933
3. इण्डियन हिस्टारिकलक्वार्टरली सं. नरेन्द्र नाथ लॉ, प्रकाशक-कॉक्सन पब्लिकेशन दिल्ली, संस्करण - 1932
4. हिन्दी अभिनवभारती, सम्पा. डॉ. नरेन्द्र, प्रकाशक दिल्ली विश्वविद्यालय, सं. - 1973
5. हिन्दुस्तानी, सं. प्रो. योगेन्द्रप्रताप सिंह, अङ-4, प्रकाशक हिन्दुस्तानी एकेडमी इलाहाबाद, सं. - 2006
6. शब्दकल्पद्रुम, ले. राधाकान्त देव, प्रकाशक - 71 नं. पाथुरियाघाटस्ट्रीट कलकत्ता, सं. शकाब्द - 1808
7. संस्कृत हिन्दी कोश - वॉमन शिवराज आप्टे, प्रकाशक - न्यू भारती बुक कार्पोरेशन दिल्ली, सं. - 1998



**अरुण कुमार त्रिपाठी**

***(तिघरा, नगहरा, बस्ती) 329-सी, अशोकनगर, इलाहाबाद, उ. प्र.***




तेन बोध्यत एकशेषश्च प्रत्याख्यातोऽसहविवक्षायामपि शास्त्रमात्रप्रक्रियोपयोगीत्याशयेन पृथगुक्त इति। किं च मौनिश्रीकृष्णभट्ट: श्रीमन्नागेशभट्टस्येदं मतं नैव स्वीकरोति।[37]

मौनिश्रीकृष्णभट्ट: श्रीमन्नागेशस्योक्तं मतम् उद्धृत्य दूषयन्नाह- 'यत्तु नवीना: यद्यपीदृशे विषये उच्चारयितुस्तन्त्रैकशेषान्यतरेणोच्चारणं बोद्धुस्त्वावृत्त्या बोध: इत्येवानुभवसिद्धम्, तथापि व्यवस्थितैवान्यमसत्ता तेन बोध्यत एकशेषश्च प्रत्याख्यातोऽसहविवक्षायामपि शास्त्रमात्रप्रक्रियोपयोगीत्याशयेन पृथगुक्त इत्यदोष: इत्याहुस्तन्त्र, सव्येतरविषणयोरिव युगपदेवोभयबोधात् अन्यथा साहित्याभावे तन्त्रावृत्त्यैकशेषान्येति द्वन्द्वो न स्यात्। तस्मादेकशेषसत्त्वे तेन, तदभावे तन्त्रेणावृत्त्या वेति मदुक्तिरेव साध्वी। यदपि एकशेषश्चेत्यादि पृथगुक्त इत्यन्तम्, तदपि न, सूत्राणां हि दृष्टादृष्टप्रयोजनम्। यत्र दृष्टप्रयोजनं नास्ति केवलादृष्टार्थतैव तत्र प्रत्याख्यानम्। यदि शास्त्रप्रक्रियोपयुक्तत्वं स्यात् तर्हि दृष्टप्रयोजनसद्भावेन प्रत्याख्यानमेव न स्यात्। ननु तर्हि एकशेषनिर्देशादिति कथमुक्तमिति चेत् शृणु, ''तस्थस्थमिपां तान्तन्ताम:'' इत्यादौ सहविवक्षाभावेऽपि द्वन्द्वकरणेन क्वचित् सहविवक्षाभावेऽपि द्वन्द्वस्य साधुत्वम्। तेन 'लोचनाधरकृता हृता रागाविकृता विकृतादेहं घ्नन्ति ते वर्धयन्ति च।' 'देवदत्तयज्ञदत्तौ स्थितिगतिमन्तौ' इत्यादि प्रयोगसिद्धि:। एवं च तदपवादैकशेषस्यापि साहित्यं विना क्वचित् प्रवृत्ति:।[38]

मौनिश्रीकृष्णभट्टेन हलन्त्यम् इति सूत्रस्थ-प्रौढमनोरमायां शब्दरत्नस्य वच: अपि खण्डितं वर्तते। शब्दरत्ने नव्यैरुक्तं यद् ब्राह्मणस्य कम्बल इत्यादावसत्यपि प्रकरणादौ स्वस्वामिभावादिप्रतीतिवदनन्तर-समीपादिशब्दप्रयोगमन्तरा सामीप्याद्यप्रतीतेस्तस्य षष्ठ्यर्थत्वाभावात् तत्प्रयोगे त्वसामार्थ्यात् षष्ठीसमासाप्राप्तिरिति मध्यमपदलोपिसमासे सौत्रे वा तत्र समासस्य क्लिष्टत्वमिति।[39]

मौनिश्रीकृष्णभट्ट उक्तं मतं खण्डयन् प्रतिपादयति यत् ब्राह्मणस्य कम्बलश्चित्रगुरित्यादौ सामीप्यार्थस्य अप्रतीतौ मानं नास्ति। अन्यथा तत्र प्रतीतस्यैव षष्ठ्यर्थत्वे स्वस्वामिभावसम्बन्धातिरिक्त- संयोगादीनामपि तत्राप्रतीतत्वेन सामीप्यवत्तेषामपि षष्ठ्यर्थत्वं न स्यात्। अत्र इष्टापत्तिरप वक्तुं न शक्यते, एकशतं षष्ठ्यर्था इति भाष्यविरोधात्। सति तात्पर्ये ब्राह्मणस्य कम्बल इत्यादौ सामीप्यार्थप्रतीतेश्च।[40]

इत्थं च मौनिश्रीकृष्णभट्ट: सामीप्यस्य षष्ठ्यर्थत्वं स्वीकरोति। मौनिश्रीकृष्णभट्टो ब्रूते यद् शब्दरत्नकारमते अनन्तरादिपदाध्याहाराद् बोध: स्वीकृत:। मौनिश्रीकृष्णभट्ट: सामीप्यस्य षष्ठ्यर्थत्वस्वीकार्यतां प्रतिपादयन् वदति यत् सामीप्यस्य षष्ठ्यर्थत्वाभावे ''अस्तेर्भू:'' इत्यत्र समीपशङ्कापरं भाष्यमसङ्गतं स्यात्, सामीप्यस्य षष्ठ्यर्थत्वाभावेन तदर्थोपस्थित्यभावे शङ्काया अनुत्थानात्। सैन्धवादिनानार्थस्थले उभयत्र शक्तिमत्त्वेऽश्वो वा लवणं वेति शंका सम्भवति[41]।

मौनिश्रीकृष्णभट्ट: प्रतिपादयति यत् ''अतो ल्रान्तस्य'' इति सूत्रकारेण, 'हस्य ल हल्' इत्युक्त्वा हकारसमीपो लकार इति तदर्थं वदता कैयटेन, 'गङ्गातीरम्', 'ग्रामकूप:' इत्यादौ सर्वैरपि सामीप्यार्थ: स्वीकृत:। सामीप्ये अवयवत्वारोपेण प्रयोग इति कथनं तु दुराग्रहमात्रम्।[42]

अन्तरादिपु समासाभावस्य कारणं तु असामर्थ्यं वर्तते, न तु षष्ठ्यर्थत्वाभावत्वमिति प्रतिपादयति मौनिश्रीकृष्णभट्ट:। मौनिश्रीकृष्णोऽत्र ब्रूते यद् यदि सामीप्यस्य षष्ठ्यर्थत्वाभावोऽभिप्रेत: स्यात् तर्हि वाक्यं विहाय समासपर्यन्तानुधावनं व्यर्थं स्यात्। मौनिश्रीकृष्णभट्ट: शब्दरत्नकारस्य मतं खण्डनं विदधान आह - तस्माद् भाष्यकैयटादिविरोधेनानेककुकल्पनया भाष्यादिसकलसम्मतमूलोक्तरप्रत्याहारखण्डनं तद्विरुद्धं सम्पूर्णसूत्रावृत्तिरेव लघीयसीति मूलसमर्थनमनुचितमिति दिक्।[43]

6. मौनिश्रीकृष्णभट्टविरचिताया: तर्कचन्द्रिकाया: कानिचन स्थलानि निदर्शनरूपेणात्र विमृष्टानि।

तर्कचन्द्रिकायां नैकेषु स्थलेषु प्रौढमनोरमा-शब्दरत्न-लघुशब्देन्दुशेखरग्रन्थानां विचारा: समीक्षिता: दृश्यन्ते। दिङ्मात्रमेवात्र प्रदर्शितम् ग्रन्थोऽयं नागेशादुत्तरवर्तिषु प्रक्रियापरिष्कारग्रन्थेषु महत्त्वपूर्णं स्थानं बिभर्ति। ग्रन्थोऽयं शीघ्रमेव राष्ट्रियसंस्कृतसंस्थानस्य गङ्गानाथझापरिसरात् प्रकाश्यतामेति।

## सन्दर्भटिप्पण्य:

1. वृत्तिदीपिका प्रिन्सेस आफ वेल्स सरस्वतीभवनग्रन्थमालाया: एकोनत्रिंशत्तमग्रन्थरूपेण 1930 खीस्ताब्दे प्रकाशिता वर्तते। अस्य संस्करणस्य सम्पादको भारद्वाज इत्युपाख्यो गङ्गाधरशास्त्री महाशयो वर्तते। अयं ग्रन्थ: पुनरपि राजस्थानपुरातनग्रन्थमाला 7 रूपेण जोधपुरत: 1956 ईस्वीये वर्षे प्रकाशिता:। वृत्तिदीपिकायां शक्ति-लक्षणा-व्यञ्जना-धात्वर्थ-तिङर्थ-सनाद्यर्थ-समासार्थ- स्त्रीप्रतययार्थ-तद्धितार्थ-विषया विस्तरेण विमृष्टा: सन्ति। ग्रन्थेऽस्मिन् उक्तविषयेषु विविधा दार्शनिकसिद्धान्ता: स्थिरीकृता दृश्यन्ते।
2. लघुविभक्त्यर्थनिर्णय: मुम्बय्यां गुजरातीमुद्रणालयेन 1951 खीस्ताब्द प्रकाशितो विद्यते। अस्य सम्पादको बाक्रे इत्युपाह्वगङ्गाधरभट्टसुतमहादवशर्ममहाशया वर्तते। अस्मिन् ग्रन्थे विभक्तयर्थविषये न्यायसिद्धान्तानां खण्डनपूर्वकं वैयाकरणसिद्धान्ता नागेशात् परं पुनरपि स्थापिता: सन्ति।
3. आख्यातवाद: इत्यपि ग्रन्थे मौनिश्रीकृष्णभट्टेन लिखित:। मौनिश्रीकृष्णभट्ट: स्वयमेव लघुविभक्त्यर्थनिर्णये स्वकृतस्याख्यातवादस्य नामोल्लिलेख।
4. स्फोटचन्द्रिका तावद् वैयाकरणानां स्फोटसिद्धान्तस्य विवरणार्थं मौनिश्रीकृष्णभट्टेन लिखिता। कृतिरियं वाराणसीत: 1899 ईस्वीये वर्षे शब्दकौस्तुभस्य परिशिष्टे प्रकाशिता। पुनश्च मुम्बईतो गुजरातीमुद्रणालयेन 1913 खीस्ताब्दे प्रकाश्यतां नीता। अस्या: कृते: 1913 संस्करणस्य सम्पादको बाक्रे इत्युपाह्वगङ्गाधरभट्टसुतमहादेवशर्मा वर्तते। स्फोटचन्द्रिकायां शब्दविषये नैयायिकानां मीमांसकानां मतानि पर्यालोचितानि अथ च वैयाकरणानां राद्धान्तो विविधाभिर्युक्तिभि: स्थापितो वर्तते। अत्र वर्णपदवाक्याखण्डपदाखण्डवाक्यस्फोटभेदेन पञ्च व्यक्तिस्फोटा निरूपिता:। वर्णपदवाक्यभेदेन त्रिविधो जातिस्फोटो निरूपित:। एवं चात्राष्टौ स्फोटा वर्णिता: सन्ति। अत्र ग्रन्थकारो नैयायिकानां मतं खण्डयन् वैयाकरणसिद्धान्तं स्थापयति। क्वचिच्च पर्वूवर्तिनां वैयाकरणानामपि मतं खण्डयति। क्वचिच्च स्वीयां नूतनामुद्भावनामपि प्रकटयति।
5. शब्दार्थतर्कामृतम् इति ग्रन्थो राष्ट्रियसंस्कृतसंस्थानस्य गङ्गानाथझापरिसरस्य Journal of Ganganath Jha Kendriya Sanskrit Vidyapeetha इति शोधपत्रिकाया: 2007 ई. संयुक्ताङ्के प्रकाशित:। अयं व्याकरणदर्शने प्रमाणप्रमेयमीमांसादृष्ट्या महत्त्वपूर्णं स्थानं बिभर्ति। ग्रन्थकृताऽत्र चतुर्षु प्रमुखेषु विषयषु विचारणा कृता। 1. प्रत्यक्षनिरूपणम् 2. अनुमाननिरूपणम् 3. उपमाननिरूपणम् 4. शब्दनिरूपणं चति। प्रत्यक्षनिरूपणप्रसङ्ग एव पदार्थचर्चाऽपि कृता दृश्यते।
6. तर्कचन्द्रिका (हस्तलेख अधिगम: Acc No.36465)
7. तर्कचन्द्रिका, (हस्तलेख: अधिगम: Acc No.36465) अइउण् इति सूत्रार्थविचारे
8. लघुशब्देन्दुशेखर:, अइउण् इति सूत्रार्थविचारे
9. तर्कचन्द्रिका, (हस्तलेख: अधिगम: Acc No.36465) अइउण् इति सूत्रार्थविचारे
10. प्रौढमनोरमा, हयवरट् इति सूत्रार्थविचारे
11. लघुशब्दरत्न:, हयवरट् इति सूत्रार्थविचारे
12. तर्कचन्द्रिका, (हस्तलेख: अधिगम: Acc No.36465) हयवरट् इति सूत्रार्थविचारे
13. तत्रैव
14. तत्रैव
15. तत्रैव
16. तत्रैव
17. तत्रैव

18. वैयाकरणसिद्धान्तकौमुदी, चतुर्दशसूत्रान्ते
19. तर्कचन्द्रिका लण् सूत्रार्थविचारे
20. ल.श.शे., लण् - सूत्रार्थविचारे
21. तत्रैव
22. तत्रैव
23. तत्रैव
24. तत्रैव
25. तर्कचन्द्रिका, (हस्तलेख: अधिगम: Acc No.36465) लण् - सूत्रार्थविचारे
26. तत्रैव
27. तत्रैव
28. तत्रैव
29. तत्रैव
30. तत्रैव
31. तत्रैव
32. तर्कचन्द्रिका, (हस्तलेख: अधिगम: Acc No.36465) 'हलन्त्यम्' इति सूत्रार्थविचारे
34. तत्रैव
35. तत्रैव
36. तत्रैव
37. लघुशब्देन्दुशेखर:
38. तर्कचन्द्रिका, (हस्तलेख: अधिगम: Acc No.36465) 'हलन्त्यम्' इति सूत्रार्थविचारे
39. लघुशब्दरत्न:, 'हलन्त्यम्' इति सूत्रार्थविचारे
40. तर्कचन्द्रिका, (हस्तलेख: अधिगम: Acc No.36465) 'हलन्त्यम्' इति सूत्रार्थविचारे
41. तत्रैव
42. तत्रैव
43. तत्रैव

## सन्दर्भग्रन्थसूची

अष्टाध्यायी, पाणिनि, सम्पा. म.म. पण्डितराज डॉ. गोपालशास्त्री दर्शन केशरी, चौखम्भा सुरभारती प्रकाशन, वाराणसी।

तर्कचन्दिका क - हस्तलेख: (Acc No.36465) प्रयागस्थराष्ट्रियसंस्कृतसंस्थानस्य गङ्गानाथझापरिसरस्य संग्रहालये सुरक्षितोऽस्ति। अयं हस्तलेख: आरम्भत: कारकप्रकरणं यावत् वर्तते।

तर्कचन्दिका ख - हस्तलेख: (Acc No.38378) सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य सरस्वतीभवनसंग्रहालये सुरक्षितोऽस्ति। अयं हस्तलेख आरम्भत: 'पद्दनो.........' इति सूत्रं यावत् वर्तते।

तर्कचन्दिका ग - हस्तलेख: (Acc No.3145) सम्पूर्णानन्दसंस्कृतविशवविद्यालयस्य सरस्वतीभवनसंग्रहालये सुरक्षितोऽस्ति। अयम् आरम्भत: पञ्चसन्धिप्रकरणं यावद् वर्तते।

तर्कचन्दिका घ - हस्तलेख: (Acc No.39432) सम्पूर्णानन्दसंस्कृतविशवविद्यालयस्य सरस्वतीभवन-संग्रहालये सुरक्षितोऽस्ति। अयम् आरम्भत: परिभाषाप्रकरणं यावत् वर्तते।

तर्कचन्दिका ङ - हस्तलेख: (Acc No.38698) सम्पूर्णानन्दसंस्कृतविशवविद्यालयस्य सरस्वतीभवनसंग्रहालये सुरक्षितोऽस्ति। अयं हलन्तप्रकरणं यावत् वर्तते। किञ्च मध्ये मध्ये अत्र नैकानि पत्राणि लुप्तानि सन्ति।

प्रौढमनोरमा- महामहोपाध्यायश्रीभट्टोजिदीक्षितविरचिता, श्रीहरिदीक्षितविरचित- लघुशब्दरत्नव्याख्ययालङ्कृता,

श्रीकन्हैयालालव्रजभूषणदासगुप्तेन प्राकाश्यं नीता, द्वितीयसंस्करणम्, संवत् 1997

लघुविभक्त्यर्थनिर्णयः- मौनिश्रीकृष्णभट्टविरचितः, वादार्थसंग्रहः तृतीयो भागः, सम्पा. वाक्रे इत्युपाह्वो गङ्गाधरभट्टसुतमहादेवशर्मा, गुजराती मुद्रणालयः, ई. 1915

लघुशब्देन्दुशेखरः- महामहोपाधयायनागेशभट्टविरचितः, षट्टीकोपेतः, द्वितीयो भागः, श्रीगुरुप्रसादशास्त्रि-ग्रन्थमालाया द्वितीयं कुसुमम्, वाणीविलासप्रकाशन, वाराणसी, विक्रम सं. 2048

लघुशब्दरत्नः - प्रौढमनोरमा- महामहोपाध्यायश्रीभट्टोजिदीक्षितविरचिता, श्रीहरिदीक्षितविरचितलघुशब्दरत्न-व्याख्ययालङ्कृता, श्रीकन्हैयालालव्रजभूषणदासगुप्तेन प्राकाश्यं नीता, द्वितीयसंस्करणम्, संवत् 1997

वैयाकरणसिद्धान्तकौमुदी - श्रीमत्परमहंसपरिव्राजकाचार्यज्ञानेन्द- सरस्वतीविरचित - तत्त्वबोधिनीव्याख्यासंवलिता सिद्धान्तकौमुदी, चौखम्भासंस्कृतप्रतिष्ठान, दिल्ली, पुनर्मुद्रितसंस्करण ई. 2002

वृत्तिदीपिका, प्रिन्सेस आफ वेल्स सरस्वतीभवनग्रन्थमाला: 29, 1930

शब्दार्थतर्कामृतम् Journal of Ganganath Jha Kendriya Sanskrit Vidyapeetha, Vol. 63 (1-4), 2007, Published 2009.

**ललित कुमार त्रिपाठी**
*सह-आचार्यः, व्याकरणे*
*राष्ट्रियसंस्कृतसंस्थानम्, गंगानाथझापरिसरः, इलाहाबाद*



# मुकुलभट्ट की रचना का वास्तविक नाम 'अभिधामातृका'

डॉ. विजयपालशास्त्री

*नवीं शती के काश्मीरी विद्वान् मुकुलभट्ट की रचना का नाम- **अभिधावृत्तिमातृका** एवं **अभिधावृत्तमातृका**, इन दो रूपों में विद्वानों में प्रचलित है। इसके अनेक संस्करण इन दो नामों से प्रकाशित हुए हैं। परन्तु उक्त रचना के दोनों ही प्रचलित नाम भ्रांतिपूर्ण हैं। इसका वास्तविक नाम- **अभिधामातृका** है। इस नामपद का भाव है- अभिधा मातृका ही है, सकल वाग्व्यवहार की माता है। जैसे माता के समान गाय को 'गोमाता' कहते हैं, वैसे ही यहां वृत्ति (वाग्व्यवहार) की माता के समान विद्यमान अभिधा को **अभिधामातृका** कहा गया है। यहां सादृश्यसम्बन्धमूला गौणी सारोपा लक्षणा है तथा **'मयूरव्यंसकादयश्च'** (2.1.71) से रूपक समास है। काव्यप्रकाश-संकेतकार माणिक्यचन्द्र सूरि (13वीं शती) ने मुकुलभट्ट की रचना का यही नाम स्पष्टतया लिखा है। आधुनिक विद्वानों में नामविषयक उक्त भ्रांति का मूल कारण इस रचना के अंतिम पद्य का अनुचित अन्वय करना है- **भट्टकल्लटपुत्रेण मुकुलेन निरूपिता । सूरिप्रबोध नायेयमभिधावृत्तिमातृका।।** यहां अन्तिम अंश को- **अभिधा वृत्तिमातृका**, इस असमस्त रूप में पढना चाहिए। इसका भाव है कि- यहां वृत्ति की मातृका अभिधा निरूपित की है। वस्तुतः यह ग्रन्थ का नाम नहीं, प्रत्युत प्रतिपाद्य विषय का निर्देश है। आधुनिक विद्वानों ने इसे ग्रन्थ का नाम मान लिया है। उनके ऐसा मानने पर श्लोकगत **निरूपिता** पद असंगत हो जाता है। क्योंकि निरूपण प्रतिपाद्य विषय का किया जाता है, न कि नाम का। इस प्रकार युक्ति व प्रमाणों से यह सिद्ध किया गया है कि प्रस्तुत रचना का वास्तविक नाम- **अभिधामातृका** है।*

काश्मीरी विद्वान् मुकुलभट्ट (9वीं ईस्वी) की शब्दशक्ति-विषयक रचना का वास्तविक नाम **'अभिधावृत्तिमातृका'** अथवा **'अभिधावृत्तमातृका'** न होकर **'अभिधामातृका'** है। यह तथ्य इस शोध लेख में सप्रमाण प्रस्तुत किया जा रहा है।

संस्कृत-काव्यशास्त्र के क्षेत्र में मुकुलभट्ट की यह एकमात्र विशिष्ट रचना उपलब्ध हुई है, जो **अभिधावृत्तिमातृका** व **अभिधावृत्तमातृका** इन दो नामों से प्रकाशित है। इसमें ग्रन्थकार ने अभिधा के व्यापक स्वरूप का निरूपण करते हुए उसे सम्पूर्ण वाग्व्यवहार की जननी किंवा सभी वृत्तियों (लक्षणा आदि) की जननी के रूप में प्रस्तुत किया है। ग्रन्थ में कुल 15 श्लोक हैं, जिन पर ग्रन्थकार ने अतीव प्रौढ, वैदुष्यपूर्ण एवं सुललित संस्कृतभाषामयी व्याख्या लिखी है।

व्याख्या सहित मूलग्रन्थ की कुल पृष्ठसंख्या निर्णयसागर-संस्करण के अनुसार 22 है। इसका कलेवर तो इतना ही है, पर विषय की महत्ता व विवेचन की प्रौढता ऐसी है कि मम्मट, हेमचन्द्र आदि प्रायः सभी परवर्ती काव्यशास्त्रियों तथा रुय्यक, सोमेश्वर, माणिक्यचन्द्र आदि काव्यप्रकाश-व्याख्याताओं ने इसे

उपजीव्य बनाया है व उद्धृत किया है। मम्मट ने यद्यपि इसके कुछ अंशों का प्रत्याख्यान किया है, परन्तु अधिकांश भाग को अपनाकर काव्यप्रकाश-द्वितीयोल्लास में इसी के आधार पर षड्विधा लक्षणा व्यवस्थापित की है। **अभिधामातृका** को बिना पढ़े मम्मट के द्वितीय उल्लास को पूर्णतया समझना सम्भव नहीं है। इस प्रकार यह रचना काव्यशास्त्र के क्षेत्र में आकर ग्रन्थ के रूप में सम्मानित है।

हमारी जानकारी में अब तक इसके पाँच संस्करण प्रकाशित हो चुके हैं। सबसे पहले निर्णयसागर मुद्रणालय मुम्बई द्वारा यह ग्रन्थ मूल रूप में मम्मट के शब्दव्यापारविचार के साथ सन् 1916 ई. में प्रकाशित हुआ था। इसके सम्पादक मंगेशरामकृष्ण तैलंग थे। इन्होंने पुण्यपत्तनस्थ राजकीय पुस्तकालय में उपलब्ध मुकुलभट्ट की इस रचना व मम्मट के शब्दव्यापारविचार की एक-एक मातृका के आधार पर इनका सम्पादन किया था। मुद्रण के समय इन्होंने निर्णयसागर मुद्रणालय के अधिपति के संग्रह में उपलब्ध एक अन्य हस्तलेख के आधार पर कतिपय स्थलों में अपने मित्र वासुदेवशास्त्री पणशीकर की सहायता से पाठशोधन किया था, ऐसा इन्होंने अपने संस्करण की प्रस्तावना में लिखा है। इस प्रकार सर्वप्रथम निर्णयसागर से छपी इस पुस्तक में रचना का नाम **अभिधावृत्तिमातृका** लिखा है।

इसके अनन्तर 1973 ई. में इस ग्रन्थ का एक संस्करण चौखम्बा विद्याभवन वाराणसी द्वारा डॉ0 रेवाप्रसादद्विवेदी-रचित हिन्दीभाष्यानुवाद के साथ प्रकाशित हुआ है। इस संस्करण में द्विवेदी जी ने ग्रन्थ का नाम **अभिधावृत्तमातृका** माना है तथा ग्रन्थ के अन्तिम श्लोक की व्याख्या में इसे ही उचित ठहराया है।

यह ग्रन्थ राष्ट्रिय-संस्कृत-संस्थान, जनकपुरी, नई दिल्ली की साहित्याचार्य परीक्षा के द्वितीय वर्ष में 100 अंक के एक स्वतन्त्र पत्र के रूप में वर्षों तक पाठ्यक्रम में निर्धारित रहा था। एतदर्थ प्रायः आचार्य रेवाप्रसाद द्विवेदी का संस्करण ही पठन-पाठन में प्रयुक्त होता रहा है। परन्तु विगत 2 वर्षों से यह ग्रन्थ उक्त पाठ्यक्रम से हटा दिया गया है।

सन् 1977 ई. में इस ग्रन्थ का हिन्दी अनुवाद के साथ एक अन्य संस्करण इन्दु प्रकाशन, 8/3 रूपनगर दिल्ली-110007. द्वारा प्रकाशित किया गया। इसका सम्पादन व हिन्दी व्याख्या डॉ0 ब्रह्ममित्र अवस्थी ने की है। इसमें भी आचार्य द्विवेदी का अनुसरण करते हुए ग्रन्थ का नाम **अभिधावृत्तमातृका** ही माना है।

डॉ0 निरुपमा त्रिपाठी ने- **अभिधावृत्तिमातृका एवं शब्दव्यापारविचार (तुलनात्मक विवेचन)** शीर्षक से प्रयाग विश्वविद्यालय के डॉ0 सुरेशचन्द्र पाण्डेय के निर्देशन में संस्कृत डी.फिल् उपाधि हेतु शोध प्रबन्ध प्रस्तुत किया है। इसके अन्त में अभिधावृत्तिमातृका व शब्दव्यापारविचार का मूलपाठ भी दिया है। इस शोधप्रबन्ध का पुस्तक रूप में प्रकाशन सन् 2007 ई. में ईस्टर्न बुक लिंकर्स, 5825, न्यू चन्द्रावल, जवाहर नगर, दिल्ली-110007. से हुआ है। इस प्रबन्ध की लेखिका ने प्रस्तुत रचना का नाम **अभिधावृत्तिमातृका** के रूप में मानना उचित ठहराया है।

इस रचना का एक अन्य संस्करण डॉ0 सुज्ञानकुमार माहान्ति द्वारा रचित सुबोधिनी संस्कृतवृत्ति व संगमनी हिन्दीवृत्ति के साथ सन् 2008 ई. में चौखम्बा कृष्णदास अकादमी, वाराणसी द्वारा प्रकाशित हुआ है। इसमें भी ग्रन्थनाम के रूप में **अभिधावृत्तिमातृका** को ही उचित सिद्ध करते हुए स्वीकार किया गया है।[1]

इस प्रकार मुकुलभट्ट की इस रचना का नाम- **अभिधावृत्तिमातृका** एवं **अभिधावृत्तमातृका** इन दो रूपों में आधुनिक काल में प्रचलित हो गया है। आचार्य रेवाप्रसाद द्विवेदी व श्री ब्रह्ममित्र अवस्थी ने

अभिधावृत्तमातृका तथा मंगेशरामकृष्ण तैलंग, डॉ0 निरुपमा त्रिपाठी व डॉ0 सुज्ञानकुमार माहान्ति ने अभिधावृत्तिमातृका नाम स्वीकार किया है।

इन संस्करणों व इनके उपजीव्यभूत हस्तलेखों को देखने से विदित हुआ कि इस प्रकार के द्विविध नाम के पीछे प्रस्तुत रचना के अन्तिम श्लोक का पाठभेद ही आधारभूत कारण है। यह श्लोक इस प्रकार है-

**भट्टकल्लटपुत्रेण मुकुलेन निरूपिता। सूरिप्रबोधनायेयमभिधावृत्तिमातृका॥**[2]

इस श्लोक के अन्तिम चरण में निर्णयसागर-संस्करण में **'वृत्ति'** शब्द छपा है तथा उसके अनन्तर पुष्पिका में भी **'भट्टमुकुलविरचिता अभिधावृत्तिमातृका समाप्ता'** ऐसा पाठ प्रकाशित है। यद्यपि निर्णयसागर-संस्करण का आधारभूत हस्तलेख हमने नहीं देखा, परन्तु अनुमान है कि उसमें उक्त दोनों स्थलों पर **वृत्ति** शब्द रहा होगा, तभी सम्पादित पुस्तक में वैसा छपा है।

इसके अतिरिक्त चौदहवीं शताब्दी में लिखे तथा वर्तमान में जिनभद्रसूरि ज्ञान भण्डार जैसलमेर में उपलब्ध हस्तलेख (Jes-331-510-1) में उपर्युक्त श्लोक के अन्तिम चरण में तो **'वृत्त'** शब्द मिलता है, परन्तु उसके अनन्तर पुष्पिका में **वृत्ति** शब्द के साथ- **भट्टकल्लटात्मजमुकुलभट्टविरचिता अभिधावृत्तिमातृका समाप्तेति। श्रीमज्जिनपतिसूरीणाम्। पुस्तिकेयम्॥** ऐसा लेख मिलता है। इस हस्तलेख की प्रतिकृति हमारे संग्रह में विद्यमान है।

इसके अतिरिक्त भाण्डारकर प्राच्यविद्या शोधसंस्थान, पूना में उपलब्ध हस्तलेख संख्या 63/1873-74 में भी उपर्युक्त श्लोक में **'वृत्त'** शब्द है तथा उसके अनन्तर पुष्पिका में **'वृत्ति'** शब्द है - **भट्टकल्लटात्मजमुकुलभट्ट-विरचिता अभिधावृत्तिमातृका समाप्तेति। समस्तु॥ सं. 1930 माघसुदि 14)**

इनके अतिरिक्त कुछ अन्य हस्तलेख हमें उपलब्ध हुए हैं, जो अपेक्षाकृत इनसे अर्वाचीन हैं, उनमें उक्त श्लोक के चतुर्थ चरण में भी **वृत्त** शब्द है तथा इसके अनन्तर उपलब्ध पुष्पिका के अन्दर ग्रन्थनाम में भी **अभिधावृत्तमातृका** इस रूप में **वृत्त** शब्द ही लिखा है। इन हस्तलेखों का विवरण निम्न है-

रघुनाथ मन्दिर पुस्तकालय, जम्मू में उपलब्ध हस्तलेख (सं0- 477, अलंकार-विभाग)। इसका पाठ- **...वृत्तमातृका। इति श्रीभट्टकल्लटपुत्रमुकुल-विरचिताभिधावृत्तमातृका समाप्ता शुभाय भवतुतरां लेखकपाठयोरों तत्सत् भद्रं पश्येम प्रचरेम भद्रम्।**

लालचन्द शोधपुस्तकालय डी0ए0वी0 कालेज, सैक्टर-10, चण्डीगढ़ से भी इस रचना का एक हस्तलेख (एम. 2940) प्राप्त हुआ है। इसका पाठ भी उक्त दोनों स्थलों पर **वृत्त** शब्द ही दिखाता है- **...... वृत्तमातृका। इति श्रीकल्लटात्मजमुकुलविरचिताभिधावृत्तमातृका समाप्ता।**

यहाँ निर्दिष्ट इन चारों हस्तलेखों की प्रतिकृतियाँ हमारे संग्रह में उपलब्ध हैं। इन्हें सामने रखकर ही उक्त पाठ यहाँ प्रस्तुत किए हैं। इन उद्धृत पाठों से स्पष्ट है कि पूर्वनिर्दिष्ट दो श्रेणियों के हस्तलेखों के आधार पर प्रस्तुत रचना का द्विविध नाम प्रचलित हुआ है।

निर्णयसागर-संस्करण के आधारभूत हस्तलेख (जिसे हमने नहीं देखा है) के अतिरिक्त जैसलमेर व पूना वाले दोनों हस्तलेखों में उक्त श्लोक के अन्तिम चरण में तो **वृत्त** शब्द ही है, परन्तु तदनन्तरवर्तिनी पुष्पिका में **वृत्ति** शब्द मिलता है, जबकि जम्मू व चण्डीगढ़ के हस्तलेखों के उक्त श्लोक व पुष्पिका में भी **वृत्त** शब्द ही मिलता है। आचार्य रेवाप्रसाद द्विवेदी ने **'अभिधावृत्तमातृका'** के हिन्दीभाष्य की प्रावेशिकी में सूचित किया है कि एशियाटिक सोसायटी कलकत्ता में उपलब्ध हस्तलेख (क्रमांक 1824)

में भी उक्त श्लोक के चतुर्थ चरण में **वृत्त** शब्द ही लिखा है[3]। इससे स्पष्ट है कि उक्त हस्तलेख में भी श्लोक व पुष्पिका में **वृत्त** शब्द ही लिखित है।

हमारी दृष्टि से अभिधावृत्तिमातृका व अभिधावृत्तमातृका दोनों ही नाम, जो अन्तिम श्लोक के पाठभेद के आधार पर माने हैं, उचित नहीं हैं तथा ग्रन्थकार को ग्रन्थनाम के रूप में अभीष्ट नहीं हैं। यह तथ्य उक्त श्लोक का उचित अन्वय करने से स्पष्ट हो जाता है। हमारे मत में इस श्लोक का उचित अन्वय इस प्रकार है-

**भट्टकल्लटपुत्रेण मुकुलेन सूरिप्रबोधानाय वृत्तिमातृका इयम् अभिधा निरूपिता।** इस अन्वय के आधार पर श्लोक का शुद्ध पाठ इस प्रकार है-

**भट्टकल्लटपुत्रेण मुकुलेन निरूपिता। सूरिप्रबोधानायेयमभिधा वृत्तिमातृका॥**

अब तक के प्रकाशित संस्करणों में '**अभिधा**' शब्द को 'वृत्तिमातृका' से जोड़कर ग्रन्थकार के वास्तविक भाव को अन्यथा रूप में प्रस्तुत किया जाता रहा है। यदि श्लोकगत **अभिधा** शब्द को **वृत्तिमातृका** के साथ समास कर (जोड़कर) प्रचलित अन्वय को मान लिया जाए तो अर्थ होगा- **यह अभिधावृत्तिमातृका निरूपित की है।** इस अर्थ में स्पष्टतया यह विसंगति है कि पुस्तक या उसके नाम को निरूपित नहीं किया जाता, प्रत्युत उसके प्रतिपाद्य विषय को निरूपित किया जाता है। यहाँ प्रतिपाद्य विषय अभिधा है, अतः ग्रन्थ के अन्त में उपसंहार के रूप में ग्रन्थकार का यह वाक्य हमारी दृष्टि से इसी रूप में ही संगत होता है कि- **वृत्ति अर्थात् व्यवहार की मातृका (माता) यह अभिधा निरूपित की है।**

उक्त श्लोक के प्रचलित अन्वय में एक बड़ी विसंगति यह भी है कि **अभिधावृत्तिमातृका** इस समस्तपद में **अभिधा चेयं वृत्तिमातृका** यह कर्मधारय मानने पर '**अभिधा**' की अपेक्षा '**वृत्तिमातृका**' इस विशेषण का पूर्वनिपात होना चाहिए। अतः यह कर्मधारय नहीं माना जा सकता। ऐसी स्थिति में इसे पूर्वोक्त प्रकार से असमस्त मानने के अतिरिक्त अन्य कोई चारा नहीं है। अन्य किसी समास की कल्पना कर भी लें तो '**निरूपिता**' पद की संगति नहीं लग पायेगी। यहां ऐसी ही समास विषयक एक कल्पना डॉ0 निरुपमा त्रिपाठी ने की है, परन्तु उनके कथन को मानने पर श्लोकगत **निरूपिता** पद असंगत हो जाता है। उनका कथन इस प्रकार है-

*''अभिधावृत्तिमातृका का समास विग्रह करने पर इसका अर्थ होगा 'अभिधावृत्ति है माता जिसकी'। इसका विग्रह इस प्रकार होगा-* ***अभिधावृत्तिः एव माता यस्याः सा,*** *'देवमातृकाः देशाः' के समान यह पद भी अन्य पद का विशेषण है। विचार करने पर यह साहित्य विद्या का विशेषण प्रतीत होता है"।*[4]

इस प्रकार डॉ0 श्रीमती त्रिपाठी के अनुसार अभिधावृत्ति है मातृका जिसकी, ऐसी साहित्यविद्या इस ग्रन्थ में निरूपित की है, ऐसा अर्थ होगा। परन्तु ऐसा मानना तो प्रकट में ही मुकुलभट्ट का सीधा विरोध करना है। वे तो स्पष्ट कह रहे हैं-

**इत्येतदभिधावृत्तं दशधात्र निरूपितम्, यो योजयति साहित्ये तस्य वाणी प्रसीदति॥**[5]

अर्थात् यहाँ हमने दशविधा अभिधावृत्त का निरूपण किया है। इसे जो साहित्य में संयोजित करता है, उसकी वाणी निर्मल हो जाती है। इससे सर्वथा स्पष्ट है कि यहाँ दशविध अभिधावृत्त का निरूपण है, न कि साहित्य का। साहित्य में तो इसका प्रयोग करने का परामर्श दिया गया है। अतः डॉ0 श्रीमती त्रिपाठी का उक्त मन्तव्य संगत नहीं है।

यदि **अभिधावृत्तेः मातृका अभिधावृत्तिमातृका** ऐसा षष्ठी तत्पुरुष समास करके इसे पुस्तिका या रचना का विशेषण मानें तो फिर वही विसंगति आती है, जिसका हम पहले निर्देश कर चुके हैं कि इसके साथ **'निरूपिता'** पद का अन्वय नहीं बन पायेगा, क्योंकि ग्रन्थ में निरूपण तो प्रतिपाद्य विषय का किया जाता है, रचना के नाम का नहीं।

आचार्य रेवाप्रसाद द्विवेदी इस ग्रन्थ के अन्तिम श्लोक की व्याख्या के अनन्तर विमर्श में लिखते हैं कि- *"अभिधा के ऊपर लिखे इस ग्रन्थ को ग्रन्थकार ने अभिधावृत्तमातृका कहा है। जबकि प्रसिद्धि है 'अभिधावृत्तिमातृका' नाम की। एशियाटिक सोसायटी के पाण्डुलेख में वृत्त शब्द ही मिलता है। मम्मट ने इसके विरोध में जो ग्रन्थ लिखा है उसमें* ***व्यापार*** *शब्द अपनाया- 'शब्दव्यापारविचार' इस प्रकार। इससे लगता है कि यहाँ मूल में वृत्त शब्द ही रहा होगा। वृत्ति शब्द देने से उसका अभिधा के साथ कर्मधारय प्रमुख हो जाता है"।*

इस मन्तव्य के विषय में हमारा कहना है कि जब **अभिधा** शब्द का आगे वाले अंश से समास ही नहीं है तो दोनों में से किसी को भी ग्रन्थनाम मानना निराधार है। हम पहले कह चुके हैं कि ऐसा मानने पर **'निरूपिता'** पद का अन्वय संगत नहीं हो पाता है। आचार्य द्विवेदी जी का जो यह कथन है कि- विवेच्य श्लोक में **वृत्ति** शब्द मानने पर उसका **अभिधा** के साथ कर्मधारय प्रमुख हो जाता है, इस पर भी हमारी वही पूर्वोक्त दोनों आपत्तियाँ हैं। प्रथम तो यह कि **वृत्ति** की अपेक्षा **वृत्त** शब्द रखकर भी इसे ग्रन्थनाम मानने पर **'निरूपिता'** पद का अन्वय नहीं लगेगा, क्योंकि निरूपण नाम का नहीं, प्रतिपाद्य विषय का किया जाता है। और द्वितीय यह कि यहाँ कर्मधारय होता तो **'वृत्तिमातृका'** इस विशेषण का पूर्वप्रयोग होना चाहिए था। अतः यहाँ कर्मधारय की संभावना बताना उचित नहीं है।

इस प्रकार उक्त हेतुद्वय के कारण इस विवेच्य श्लोक के अन्तिम चरण में **'अभिधा वृत्तिमातृका'** यह समास रहित व **वृत्त** के स्थान पर **वृत्ति** वाला पाठ ही उचित है। जैसा कि हम पहले कह चुके हैं कि **वृत्ति** शब्द का अर्थ व्यवहार है- **व्यवहारो हि वृत्तिरुच्यते**[7], अतः- **वृत्तिमातृका यह अभिधा निरूपित की**, ऐसा अर्थ सम्यक् संगत हो जाता है।

मीमांसाशास्त्रनिष्णात मुकुलभट्ट की मूल दृष्टि भी यही है कि वे सकल वाग्व्यवहार का मूल अभिधा को ही मानते हैं। अत एव वे लक्षणा को भी षड् अभिधावृत्तों के रूप में ही प्रस्तुत करते हुए अभिधा से भिन्न मानने को तैयार नहीं हैं तथा मीमांसकत्व-वासना से वासितान्तःकरण होने के कारण व्यंजना को भी स्वीकार नहीं करते हैं। इस प्रकार उक्त श्लोक में उन्होंने अभिधा को वृत्ति=व्यवहार की मातृका के रूप में प्रस्तुत करते हुए **'वृत्तिमातृका'** विशेषण से विभूषित कर गौरवान्वित किया है।

मुकुलभट्ट द्वारा प्रस्तुत इस विशेषण की एक संगति यह भी लगाई जा सकती है कि यहाँ निरूपित की हुई यह अभिधा ही अन्यों द्वारा स्वीकृत सभी वृत्तियों की माता है। अर्थात् तात्पर्यावृत्ति, लक्षणावृत्ति, गुणवृत्ति व व्यंजनावृत्ति, जो अन्यों द्वारा स्वतन्त्र वृत्तियों के रूप में मान्य हैं, उन सबकी जननी यह अभिधा ही है, जिसे हमने यहाँ निरूपित किया है। इस प्रकार यहाँ मीमांसकशिरोमणि मुकुलभट्ट का यह आग्रह व्यञ्जित होता है कि उक्त वृत्तियों को स्वतन्त्र न मानकर उनकी जननी अभिधा को ही मानने से ही सकलप्रयोजनसिद्धि हो जाती है। अतः उक्त पद्य में ग्रन्थकार लक्षणादि वृत्तियों किंवा सम्पूर्ण वृत्ति=वाग्व्यवहार की मातृका (माता) के रूप में अभिधा को ही मानने पर बल देते हुए दिखाई पड़ते हैं।

अपने इस भाव को वे इस श्लोक के ठीक ऊपर वाले इन शब्दों में प्रस्तुत कर रहे हैं- **दशविधोनानेनाभिधावृत्तेन समग्रस्य वाक्परिस्पन्दस्य व्याप्तत्वाद् व्याकरण-मीमांसा- तर्क-साहित्यात्मकेषु**

**चतुर्षु शास्त्रेषूपयोगात् तद्द्वारेण च सर्वासु विद्यासु सकलव्यवहारमूलभूतासु प्रसरणादस्य दशविधास्याभिधावृत्तस्य सकलव्यवहारव्यापित्वमाख्यातम्।** वस्तुतः ये पंक्तियाँ उपर्युक्त अन्तिम श्लोक की अवतरणिका के रूप में हैं और इनके भाव को श्लोक में **वृत्तिमातृका अभिधा निरूपिता** इन पदों से प्रकट किया है।

इस विवेचन से स्पष्ट है कि प्रस्तुत श्लोक में प्रतिपाद्य विषय का निर्देश किया है, न कि ग्रन्थ के नाम का। अतः अनुचित अन्वय के आधार पर इसे ग्रन्थ का नाम मानना भ्रान्तिमूलक है। अब रही बात **वृत्त** और **वृत्ति** रूप पाठान्तर की, तो इसमें हमारी सम्मति है कि यहाँ **वृत्ति** शब्द ही मूल पाठ के रूप में मानना उचित है। क्योंकि वृत्ति शब्द वाग्व्यवहार के लिए अधिक प्रसिद्ध है तथा इसके भाव को ध्यान में रखते हुए ही मुकुलभट्ट पूर्वनिर्दिष्ट अवतरणिका में **वाक्परिस्पन्द** एवं **सकलव्यवहार** इन शब्दों का प्रयोग करते हैं।

वृत्ति शब्द को यहाँ मूलपाठ मानने के पक्ष में दूसरा अन्तरंग साक्ष्य यह भी है कि ग्रन्थकार की दृष्टि में दशविध अभिधावृत्त के द्वारा सकल वाक्परिस्पन्द को व्याप्त किया हुआ बताया है। यहाँ दशविध अभिधावृत्त से व्याप्त वाक्परिस्पन्द वाग्व्यवहार ही है और उसके लिए यहाँ वृत्ति शब्द ही समुचित हो सकता है, न कि वृत्त शब्द। **इत्येतदभिधावृत्तम्**, तथा **दशविधोनानेनाभिधावृत्तेन** में **वृत्त** शब्द का अर्थ चरित या आचरित है–

**वृत्तं स्वरूपे चरिते वृत्तौ छन्दोविधासु च**[8]।

यद्यपि उपर्युक्त दोनों स्थलों में चरित अर्थ में प्रयुक्त वृत्त शब्द वृत्ति (व्यवहार) अर्थ में भी प्रयुक्त होता है। तथापि यह **चरित** अर्थ में ही व्यवहार अर्थ की अपेक्षा अधिक प्रसिद्ध है। अतः अर्थसांकर्य न हो, एतदर्थ ग्रन्थकार ने चरित अर्थ में वृत्त शब्द का प्रयोग कर व्यवहार अर्थ में पुनः उसी का प्रयोग न कर वृत्ति शब्द का प्रयोग किया है। यदि वृत्ति के स्थान पर पुनः वृत्त का प्रयोग करते तो उसे **इत्येतदभिधावृत्तं** इस पूर्व प्रयोग से भिन्नार्थक अर्थात् व्यवहारार्थक बताने के लिए पृथक्शः व्याख्या करनी पड़ती। यदि उसे पूर्वार्थ में ही प्रयुक्त करते तो यह दोष होता कि जब अभिधा का दशविध वृत्त बता ही चुके हैं, तो पुनः उस अभिधा को उक्त वृत्त की मातृका बताना तुरन्त की हुई खटकने वाली पुनरुक्ति होती। अतः ग्रन्थकार ने अन्त में जानबूझ कर ही व्यवहारार्थक वृत्ति शब्द का प्रयोग किया है तथा इसका संकेत प्रकृत श्लोक की अवतरणिका में **वाक्परिस्पन्द** व **सकलव्यवहार** पदों से किया है।

अतः श्लोक का यह अर्थ सर्वथा स्पष्ट हो गया है कि ग्रन्थकार ने यहाँ– **वृत्तिमातृका अर्थात् सर्वविध वाग्व्यवहार की माता अभिधा निरूपित की है।** मातृका शब्द माता के पर्यायवाची के रूप में कोषों में निर्दिष्ट है–

**'मातृका धातृकामात्रोर्देवीभिद्वर्णमालयोः'**[9]

इसका भाव यह है कि मातृका शब्द धातृका (धाय, उपमाता), माता, षोडश मातृकाओं के रूप में प्रसिद्ध देवियों तथा वर्णमाला के लिए प्रयुक्त होता है। विवेच्य श्लोक में यह शब्द माता के अर्थ में ही प्रयुक्त समझना चाहिए। इस आधार पर श्लोकगत वाक्य का अर्थ सुतराम् स्पष्ट हो गया कि यह अभिधा जो कि वृत्ति (वाग्व्यवहार) की माता है, यहाँ निरूपित की गई है। मुकुलभट्ट के इस सम्पूर्ण ग्रन्थ की शैली से भी यही अर्थ पुष्ट होता है, क्योंकि वे अभिधा में ही लक्षणा आदि वृत्तियों को समाहित करते हुए दिखाई देते हैं।

अब प्रश्न होता है कि जब उक्त श्लोक में ग्रन्थनाम का निर्देश नहीं है तो ग्रन्थ का नाम क्या है? इस प्रश्न का उत्तर हमें जैनमुनि आचार्य माणिक्यचन्द्र सूरि (13वीं शती) की **काव्यप्रकाश-संकेत** टीका से मिलता है। काव्यप्रकाश के द्वितीय उल्लास में **'लक्षणा तेन षड्विधा'** पर वे लिखते हैं- **'संक्षेपेणैवात्र लक्षणाविचारः कृतः। विस्तरेण तु मुकुलादिविरचिताभिधामातृकादिग्रन्थेभ्यो ज्ञेयः'**।[10]

इस उद्धरण से यह तथ्य सर्वथा स्पष्ट है कि मुकुलभट्ट की रचना का नाम **अभिधामातृका** है। इसकी निष्पत्ति इस प्रकार समझनी चाहिए- **अभिधा मातृका एव अभिधामातृका**, अर्थात् अभिधा ही सकल वाग्व्यवहार की माता है। इसे **'मुखं चन्द्रः'** के समान समझना चाहिए और उसी के समान यहाँ **अभिधा** इस उपमेयभूत विषय पर **मातृका** इस उपमानभूत विषयी का आरोप होकर गौणी सारोपा में **अभिधामातृका** यह समस्त रूप बना है। यहाँ अभिधा विशेष्य तथा मातृका विशेषण है। **'विशेषणं विशेष्येण बहुलम्'**[11] के अनुसार विशेषण-विशेष्य समास की रीति से तो **'नीलोत्पलम्'** के समान यहाँ भी विशेषण **मातृका** शब्द पहले आना चाहिए था एवं **अभिधा** शब्द बाद में। परन्तु क्योंकि विशेषण-विशेष्य भाव होते हुए भी यहाँ **मुखं चन्द्रः मुखचन्द्रः** के समान रूपक समास है। और रूपकस्थल में विशेषण के परनिपात व विशेष्य के पूर्वनिपात के लिए **'मयूरव्यंसकादयश्च'**[12] से समास माना जाता है। इस प्रकार **मुखचन्द्रः** के समान यहाँ भी विशेषण का पूर्वनिपात न होकर विशेष्य का पूर्वनिपात है। इस रीति से **अभिधामातृका** यह समस्त शब्द बना है।

यहाँ प्रतिपक्षी द्वारा यह प्रश्न भी किया जा सकता है कि- यदि **अभिधामातृका** में मुखचन्द्रः की तरह रूपक समास किया जा सकता है तो- **अभिधावृत्तिः मातृका अभिधावृत्तिमातृका** यह रूपक समास भी हो सकता है। फिर **'अभिधा वृत्तिमातृका'** इस असमस्त स्थिति के लिए ही आग्रह क्यों? तो इसका उत्तर है कि इस प्रकार भी यह समास किया जा सकता है, परन्तु ऐसा करके इसे आपके अनुसार पुस्तक का नाम मानने पर वही **'निरूपिता'** पद की असंगति वाली पूर्वोक्त समस्या आ जाती है। अतः – **वृत्तिमातृका अभिधा निरूपिता** यह असमस्त रूप मानना ही श्रेयस्कर व निर्दुष्ट है। इस प्रकार यह निश्चित हुआ कि यहाँ प्रतिपाद्य विषय का ही निर्देश है, ग्रन्थनाम का नहीं।

अभिधामातृका नाम के पीछे काश्मीर शैव दर्शन का प्रभाव भी स्पष्टतया परिलक्षित होता है। इस दर्शन के आद्य आचार्य वसुगुप्त ने वाक्तत्व के विषय में कहा है- **ज्ञानाधिष्ठानं मातृका**[13], इस प्रकार वाक् को सकल पर-अपर (सूक्ष्म-स्थूल) ज्ञान का मूल मानते हुए मातृका नाम दिया है। **अभिधामातृका** नामकरण करते हुए मुकुलभट्ट भी इसी भाव को प्रकट कर रहे हैं। यहाँ परम्परा का प्रभाव तो है ही, साथ में यह भी स्फुटतया द्योतित हो रहा है कि अभिधा को ही मातृका रूप में प्रस्तुत करते हुए मुकुलभट्ट ने ग्रन्थ को यह नाम दिया है। अतः यहाँ मध्य में **'वृत्त'** या **'वृत्ति'** रखना सर्वथा निराधार है।

मुकुलभट्ट, वसुगुप्त की रचना के रूप में मानी जाने वाली स्पन्दकारिका के व्याख्याता सुविदित काश्मीरी विद्वान् भट्ट कल्लट के सुपुत्र थे। अतः इन पर काश्मीर शैवदर्शन की परम्परा का पैतृक प्रभाव सहज एवं अपरिहार्य था।

मातृका शब्द वर्णमाला के लिए भी इसीलिए प्रयुक्त होता है कि वह सम्पूर्ण वाङ्मय की मातृरूप है, मूल उपादान है। संस्कृत का यह मातृ शब्द लेटिन में MATER रूप में माता के अर्थ में ही प्रयुक्त होता है। यही इंग्लिश में MATERIA, MATERIAL तथा MATTER के रूप में विस्तार को प्राप्त हुआ है। वर्तमान में इंग्लिश में MATTER शब्द पदार्थ या मूल उपादान के अर्थ में प्रयुक्त होता है। इस प्रकार संस्कृत का मातृ शब्द ही लेटिन से होते हुए इंग्लिश में उक्त रूप में परिणत हुआ है। इससे स्पष्ट है कि मातृ शब्द

लेटिन में माता (MATER) व इंग्लिश में मूल उपादान (MATTER) के अर्थ में आज भी प्रचलित है।

प्रस्तुत ग्रन्थ में भी अभिधा सम्पूर्ण वाग्व्यवहार का मूल उपादान होने से मातृका रूप में कही गई है। मातृका शब्द उक्त अर्थ में काव्यों में भी प्रयुक्त हुआ है–

**तत्र राजपुरी नाम राजधानी विराजते। राजराजपुरीसृष्टौ स्रष्टुर्या मातृकायते।।**[14]

इस प्रकार उक्त विवेचन से यह स्पष्ट हो गया है कि ग्रन्थ के प्रचलित नाम के स्थान पर काव्यप्रकाश-संकेतकार आचार्य माणिक्यचन्द्र सूरि के प्रमाण से **अभिधामातृका** को ही ग्रन्थनाम मानना उचित है। आचार्य माणिक्यचन्द्र सूरि एक महान् कवि, उच्चकोटि के समालोचक व अगाध शास्त्रीय पाण्डित्य से विभूषित प्रौढ विद्वान् थे। वे **पार्श्वनाथचरितम्** व **शान्तिनाथचरितम्** महाकाव्य एवं **काव्यप्रकाश-संकेत** जैसी गम्भीर रचनाओं के रचयिता हैं। उनके लेख को अश्रद्धेय मानने का कोई कारण नहीं दिखता।

जैन आचार्यों की परम्परा में बड़े ही समृद्ध ग्रन्थभण्डार रहे हैं। अतः माणिक्यचन्द्र सूरि द्वारा प्रत्यक्षदृष्ट मूलग्रन्थ के आधार पर ही **अभिधामातृका** नाम लिखा प्रतीत होता है। यहाँ **श्रीहेमचन्द्राचार्य ज्ञानभण्डार पाटण (गुजरात)** से उपलब्ध माणिक्यचन्द्र सूरि के काव्यप्रकाश-संकेत के उन दो भिन्न-भिन्न हस्तलेखों की उस पंङि्क्त को भी स्कैन करके प्रस्तुत किया जा रहा है, जिसमें मुकुलभट्ट की इस रचना को **'अभिधामातृका'** नाम से निर्दिष्ट किया है–

संक्षेपेणैवात्र लक्षणाविचारः कृतः।। विस्तरेण तु मु

कुलादिरचिताभिधामातृकादिग्रन्थेभ्यो ज्ञेयः।।

हस्तलेख-विवरण– डा.– 5912, पत्र– 150, काव्यप्रकाश-संकेत (35वें पत्र पर)

संक्षेपेणैवात्र लक्षणाविचारः कृतः ।। विस्तरेण तु

मुकुलादिरचिताभिधामातृकादिग्रन्थेभ्यो ज्ञेयः।

हस्तलेख-विवरण– डा.– 169, ग्रन्थ– 6651, काव्यप्रकाश-संकेत

यहाँ उपन्यस्त दोनों हस्तलेखों की यह पंक्ति प्राचीन देवनागरी में लिखी है, जिसमें कुछ अक्षरों की बनावट व मात्रा आज की देवनागरी से भिन्न है। अतः वाचनसौकर्य के लिए यहाँ हस्तलिखित पंक्ति के नीचे टंकित रूपान्तर दे दिया है।

हमारा विचार है कि माणिक्यचन्द्र सूरि (13वीं शती) तक मुकुलभट्ट की इस रचना के प्रारम्भ में ग्रन्थनाम के रूप में **'अभिधामातृका'** ही लिखा जाता था। परन्तु अनन्तरवर्ती काल में पूर्वचर्चित अन्तिम श्लोक का भ्रान्त अन्वय कर तदनुसार श्लोकगत **अभिधावृत्तिमातृका/अभिधावृत्तमातृका** शब्द को ही

साक्षात् ग्रन्थकार द्वारा निर्दिष्ट नाम मानकर प्रचलित कर दिया गया, जो कि गतानुगतिकतया आज भी चल रहा है। पूर्वप्रस्तुत विवेचन के आलोक में इसका संशोधन अपेक्षित है। एतदर्थ ही विवेकशील विद्वज्जनों की सेवा में यह शोधनिबन्ध विनम्रतापूर्वक प्रस्तुत है।

अन्त में **अभिधामातृका** के पाठ के विषय में कुछ निवेदन करना अप्रासंगिक नहीं होगा। अब तक प्रकाशित संस्करणों का पाठ अनेक स्थानों पर दोषग्रस्त व विपर्यस्त है। हमने उपलब्ध हस्तलेखों के आधार पर महत्त्वपूर्ण पाठशोधन कर इसका समीक्षात्मक-संस्करण तैयार किया है, जो यथासम्भव शीघ्र ही राष्ट्रिय-संस्करण-संस्थान, वेदव्यास-परिसर, बलाहर (कांगड़ा) हिमाचल प्रदेश से प्रकाशित किया जाएगा। इसमें पाठशोधन के अतिरिक्त अन्त में कुछ शोधेपयोगी परिशिष्ट भी रहेंगे।

हमारा विचार है कि **अभिधामातृका** की एक पंजिका (विषमपदभंजिनी टीका) लिखी जाए, जिससे ग्रन्थ के विशिष्ट स्थलों के अवबोधन में सहायता मिल सके। यदि सुयोग रहा तो भगवत्कृपा से इस संकल्प के पूर्ण होने की आशा है।

**सन्दर्भटिप्पणी**

1. द्रष्टव्य- उपोद्घातः पृ0- 38;
2. अभिधावृत्तिमातृका- 15;
3. द्रष्टव्य- अभिधावृत्तमातृका प्रावेशिकी, पृष्ठ- 63;
4. अभिधावृत्तिमातृका एवं शब्दव्यापारविचार, तुलनात्मक विवेचन, पृ0 212;
5. अभिधावृत्तिमातृका- 13-14;
6. अभिधावृत्तमातृका, पृ0- 74;
7. ध्वन्यालोक- 3/33, वृत्तिभाग;
8. वैजयन्तीकोष-5/6/76;
9. मेदिनीकोष- 1. 139;
10. काव्यप्रकाशसंकेत- 2. 12, खण्ड-1, पृ.- 114;
11. अष्टाध्यायी- 2. 1.56;
12. अष्टाध्यायी- 2. 1. 71;
13. शिवसूत्र- 1/4; **'काश्मीरीय शैवदर्शन एवं स्पन्दशास्त्र'** के अन्तर्गत, द्वितीय अध्याय- पृ. 44;
14. वादीभसिंह-विरचित क्षत्रचूडामणि-1/5;

**सन्दर्भग्रन्थसूची**

1. अभिधावृत्तिमातृका- निर्णयसागर मुद्रणालय मुम्बई, 1916 ई.
2. अभिधावृत्तमातृका - हिन्दीभाष्यानुवादकार डॉ0 रेवाप्रसाद द्विवेदी, चौखम्बा विद्याभवन वाराणसी, 1973 ई.
3. अभिधावृत्तमातृका-सम्पादक व हिन्दी व्याख्याकार- डॉ0 ब्रह्ममित्र अवस्थी, इन्दु प्रकाशन, 8/3 रूपनगर दिल्ली-110007. संस्करण 1977 ई.
4. अभिधावृत्तिमातृका- वृत्तिकारः संपादकश्च- डॉ॰ सुज्ञानकुमार माहान्ति, चौखम्भा कृष्णदास अकादमी वाराणसी, प्रथम संस्करण-2008 ई॰
5. अभिधावृत्तिमातृका एवम् शब्दव्यापारविचार (तुलनात्मक विवेचन)- डॉ॰ निरुपमा त्रिपाठी, ईस्टर्न बुक लिंकर्स, 5825 न्यू चन्द्रावल, जवाहर नगर दिल्ली- 110007, प्रथम संस्करण 2007 ई॰

6. ध्वन्यालोकः- आनन्दवर्धन, सम्पादक- डॉ॰ नगेन्द्र, ज्ञानमण्डल लिमिटेड वाराणसी, 1998 ई॰
7. वैजयन्तीकोषः - यादवप्रकाशाचार्यविरचितः, संपादक- पं॰ हरगोविन्दशास्त्री, चौखम्भा भारती अकादमी वाराणसी, पुनर्मुद्रण-2008 ई॰
8. मेदिनीकोषः- मेदिनीकर-रचितः, सम्पादक- जगन्नाथशास्त्री होशिङ्गः, चौखम्भा संस्कृत-संस्थान वाराणसी, पुनर्मुद्रण- 2064 वि॰
9. काव्यप्रकाशसंकेत, प्राच्यविद्या संशोधनालय, मैसूरु विश्वविद्यालय, मैसूरु, 1974 ई.
10. अष्टाध्यायी- वैदिक यन्त्रालय, केसरगंज, अजमेर (राजस्थान), 2065 वि.
11. शिवसूत्र- **'काश्मीरीय शैवदर्शन एवं स्पन्दशास्त्र'** के अन्तर्गत, डॉ. श्यामाकान्त द्विवेदी, चौखम्भा सुरभारती प्रकाशन वाराणसी, प्रथम संस्करण 2009 ई.
12. क्षत्रचूडामणिः (काव्यम्)- वादीभसिंह-रचितम्, सरस्वती महल तंजौर, (तमिलनाडु), 2009 ई॰

डा. विजयपालशास्त्री प्रचेताः (साहित्यविभागाध्यक्षः)
*राष्ट्रिय-संस्कृत-संस्थानम्, वेदव्यास-परिसरः,*
*बलाहर, निकट-देहरा ( कांगड़ा )*
*हिमाचल-177 101.*



# स्वभावोक्तिपरिशीलनम्

विश्वम्भरनाथ गिरिः

स्वभावोक्तिर्हि सकलालङ्कारिकैरभ्युपगतो लक्ष्यग्रन्थेष्वनुभूयमानचमत्कारः प्रमुखोऽर्थालङ्कारोऽस्ति। परन्त्वाचार्यकुन्तको नाङ्गीकरोत्येतं प्रत्युत साटोपमाक्षिपत्यपि। महिमभट्टस्तु तत्कृतानाक्षेपानपास्य स्वाभावोक्तिं समर्थयति। तत्र किं तत्त्वमिति जिज्ञासया प्रवृत्तोऽयं लेखः समासतः स्वभावोक्तिविषयकं यावच्चिन्तनं यथावसरमुपस्थाप्य समीक्ष्य च प्रस्तौति।

स्वभावोक्तिस्तावदालङ्कारिकैरभ्युपगतः प्रमुखोऽर्थालङ्कारोऽस्ति। प्रायशः सर्वेऽप्याचार्या स्वभावोक्तेर्निरूपणं चर्चां वावश्यं कृतवन्तः। तथापि वक्रोक्ति सम्प्रदायस्य प्रवर्त्तका राजानककुन्तकमहोदया अस्या प्रबलतरं विरोधं प्रदर्शितवन्तः। तत्र किन्तत्त्वमिति जिज्ञासया प्रवृत्तिप्रक्रमे प्रथमं तावत् स्वभावोक्तेर्मम्मटसम्मतं स्वरूपमुपस्थाप्यते। तद्यथा -

**स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम्[1]॥**

स्वभावः पदार्थप्रवृत्तिनिमित्तभूतो धर्मः [2]जातिगुणक्रियाद्रव्य रूपस्तस्योक्तिरभिधावृत्त्या कथनं वर्णनं यत्र स स्वभावोक्तिरित्यन्वितार्थं नाम। डिम्भादेः बालादेः स्वगतयोः स्वमात्रस्थितयोः क्रियारूपयोः वर्णनं स्वभावोक्त्यलङ्कार इति लक्षणम्। अत्र रूपपदेन वर्णः संस्थानञ्चेति द्वयमप्यभिमतम्। तेन बालादिगतस्य (जातिविशिष्टव्यक्तिनिष्ठस्य) गुणक्रियारूपस्य स्वाभाविकस्य धर्मस्याभिधावृत्त्या चमत्कारि यथा स्यात्तथा प्रतिपादनं स्वभावोक्त्यलङ्कार इति लक्षणसारसंक्षेपः। तदुक्तं सारबोधिनीकृता -

**यादृशस्वाभाविकधर्माभिधाने चमत्कारस्तादृश एवालङ्कारस्तेन "गोरपत्यं वलीवर्दो घासमत्ति मुखेन स" इत्यादेर्निरासः।[3]**

**पश्चादङ्घ्रीप्रसार्य त्रिकनतिविततं द्राघयित्वाङ्गमुच्चै-**
**रासज्याभुग्नकण्ठो मुखमुरसि सटां धूलिधूम्रां विधूय।**
**घासग्रासाभिलाषादनवरतचलत्प्रोथतुण्डस्तुरङ्गो,**
**मन्दं शब्दायमानो विलिखति शयनादुत्थितः क्ष्मां खुरेण[4]॥**

अङ्घ्रिप्रसरणसुदीर्घीकरणमुखवक्षोलगनानि संस्थानोक्तयः, धूलिधूम्रा इति वर्णस्योक्तिः, चलत्प्रोथतुण्ड इति संस्थानोक्तिः। शब्दायमानो विलिखति चेति पदद्वयेन क्रियाया उक्तिः। तदेवमश्वगतक्रियारूपयोः वर्णनात्स्वभावोक्तिरलङ्कारः। एवं "ग्रीवाभङ्गाभिराममि"त्याद्युदाहरणान्तराणि। सर्वैरप्याचार्यै-र्ध्वनिवादिभिरानन्द-वर्द्धनाभिनवगुप्तमम्मटरुय्यक-विश्वनाथाप्पयदीक्षित प्रभृतिभिः स्वभावोक्त्यलङ्कारोऽभ्युपगतो निरुपितश्चोपलभ्यते काव्यात्मभूतरसध्वनेर्व्यञ्जकेष्वभिधानप्रकारभूतस्यास्याभ्युपगमे बाधकाभावात्। मम्मटस्तावद्ध्वनिप्रस्थापक-परमाचार्य इति तन्मतेनेह तत्स्वरूपमुपदर्शितम्।

स्वभावोक्तौ पदार्थगतस्य सहजातधर्मस्य हृद्यं वर्णनं क्रियते। एतच्च यथा कथञ्चिदर्थव्यक्तिगुणेऽपि

समुपलभ्यते। अतएव मम्मटादिभिर्दशगुणानां त्रिषु गुणेष्वन्तर्भावप्रसङ्गेऽर्थव्यक्तेः स्वभावोक्तावन्तर्भावः कृतः। राजानककुन्तकः पदार्थनिष्ठसहजातधर्मस्य सौन्दर्यं वस्तुवक्रतारूपेणोररीकरोति। अतस्सः स्वभावोक्तेः खण्डनं कृतवान्। तन्मतस्य समीक्षणार्थं तत्पूर्ववर्तिनामाचार्याणां समकालिकानां काव्यशास्त्रिणां च स्वभावोक्तिविषयं चिन्तनमवलोकनीयम्।

मुनिना भरतेन स्वभावोक्तेर्निरूपणं नैव कृतम्। तेन चत्वारोऽलङ्कारा: निरूपिता यत्र नास्ति स्वभावोक्तिः। षट्त्रिंशल्लक्षणानि चापि तेन निरूपितानि किन्तु न तत्रापि क्वचित्स्वभावोक्तितत्त्वं स्पष्टमुपलभ्यते। परन्तु सोऽर्थव्यक्तिगुणं स्वीकरोति। तल्लक्षणं यथा -

**सुप्रसिद्धा धातुना तु लोककर्मव्यवस्थिता।**
**या क्रिया क्रियते काव्ये सार्थव्यक्तिः प्रकीर्त्यते[5]॥**

षोडशेऽध्याये भरतेन उपदिष्टस्य लक्षणं कृतम्। तद्यथा -

**यथादेशं यथाकालं यथारूपं च वर्ण्यते।**
**यत्प्रत्यक्षं परोक्षं वा दृष्टं तद्वर्णतोऽपि वा॥**
**परिगृह्य च शास्त्रार्थं यद्वाक्यमभिधीयते।**
**विद्वन्मनोहरं स्वान्तमुपदिष्टं तदुच्यते[6]॥**

भरतस्यार्थव्यक्तौ स्वभावोक्तेस्तत्त्वं नैव स्पष्टीभवति परन्तूपदिष्टाख्यलक्षणे यथाकथञ्चित् स्वाभाविकवर्णनं सहृदयहृदयाह्लादकृच्चमत्कारि स्थितमिति कदाचिद्वक्तुं शक्यते। अतोऽर्थव्यक्ति-गुणत्वेनोपदिष्टाख्यलक्षणेन वा कदाचिखरतस्याप्यभिमतमासीत् वस्तुस्वभाववर्णनागतं सौन्दर्यमित्येव प्रकरणाशयः।

सर्वप्रथममलङ्कारपितामहस्य भामहस्य काव्यालङ्कारे स्वभावोक्ति निरूपणमुपलभ्यते। स लिखति -

**स्वभावोक्तिरलङ्कार इति केचित्प्रचक्षते।**
**अर्थस्य तदवस्थत्वं स्वभावोऽभिहितो यथा॥**
**आक्रोशन्नाह्वयन्नन्यानाधावन् मण्डलैर्नुदन्।**
**गाः वारयति दण्डेन डिम्भः शस्यावतारणीः[7]॥**

(भामहः, काव्या0-2।93-94)

अनेन भामहवचनेन विज्ञायते यदेस्मात्पूर्वं स्वभावोक्त्यलङ्कारस्य स्थितिरासीत्। वस्तुनः स्वभावमात्रस्य यथावस्थवर्णनं काव्यसौन्दर्याभिवर्द्धकतया स्वीकृतमासीत् परन्तु भामहोऽतिशयोक्तिरूपां वक्रोक्तिं सर्वालङ्कारबीजत्वेनाङ्गीकृतवानतः परसम्मततयैव स्वभावोक्तिं प्रदर्शयति स्म। उपरि समुद्धृतप्रथमकारिकायाः पूर्वार्द्धेनैतिह्यमुत्तरार्द्धेन लक्षणं द्वितीयकारिकयोदाहरणञ्च तेन प्रदर्शितम्। तन्मतेन वस्तुनो वक्राभिधानेतरसामान्यरूपेण वर्णने न कश्चिच्चमत्कारः। चमत्काराभावे तु काव्यत्वमेवासम्भवि। अतो वक्रोक्त्यर्थमेव कविभिर्यतनीयम् -

**सैषा सर्वैव वक्रोक्तिरनयार्थो विभाव्यते।**
**यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना[8]॥**

वक्रतां विनापि काव्यत्वाभ्युपगमे ''गतोऽस्तमर्कः भातीन्दुः'' इत्यादावपि काव्यत्वं प्रसज्येत। न हि नितान्तं वस्तुस्वभावाख्यानेन कवेर्वाणी विभूष्यते। अतो वक्राभिधेया शब्दोक्तिर्वाचामलङ्कृतिः-

**न नितान्तादिमात्रेण जायते चारुता गिराम्।**
**वक्राभिधेयाशब्दोक्तिरिष्टा वाचामलङ्कृतिः[9]॥**

तदेवं सामान्यत: भामहस्य मतेन नास्त्येव स्वभावोक्तिरिति प्रतिभाति। परन्तु नेदं तथ्यम्। वक्रोक्ति: स्वभावोक्तेर्विपरीतेव प्रतिभाति सैव च सर्वालङ्कारबीजत्वादतीवावश्यकीति भामहकथनमेव भ्रमहेतु:। वस्तुतो नास्ति वक्रोक्तिस्वभावोक्त्योर्विरोध:। वक्रोक्तिशब्दस्य सामान्याभिधानेतरत्वमेवार्थ: भामहाभिमत:। एतच्च विशिष्टरूपं यत्स्वभावोक्तावपि विद्यत एव। अतो भामहेन स्वभावोक्तेर्लक्षणमुदाहरणञ्चापि प्रदर्शितम्। यत्र केवलं वस्तुन: साधारणगुणानामेव यथावद्वर्णनमुपलभ्यते तत्र स वार्ता स्वीकरोति, न तु काव्यत्वम्। प्रश्न उदेति भामह: ''केचित्'' इति कथनपूर्वकं स्वभावोक्तिं प्रस्तौति ''वक्रोक्तिरेव वाचामलङ्कृति'' इति च वदति, अत्र का सङ्गति:। भामहात्पूर्वं बाणभट्टस्य हर्षचरिते ''नवोऽर्थो जातिरग्राम्या'' इत्यत्र जातिशब्देन स्वभावोक्तेश्चर्चा श्रूयते। एवञ्च भट्टिकाव्ये एददेव काव्योपकरणं वार्ताशब्देनोपलभ्यते। तत्र दण्डिना जातिरङ्गीकृता, भामहेन तु जात्यपेक्षया व्यापकत्वात्स्वभावोक्तिरभ्युपगतेति। वार्ता तु तन्मतेन काव्याङ्गमेव न भवति। सम्भवत: भरत-बाणभट्ट-भट्टिकाव्यकृतामभिप्रायानुरूपमेव ''केचिदि''त्यनेन प्रदर्शयता भामहेन स्वभावोक्तिर्लक्षितोदाहृता च। लक्ष्यग्रन्थेषुरामायणमहाभारतश्रीमद्भागवतादिषु तु हृद्यस्वाभाविकवर्णनानां प्राचुर्येण स्थितिरासीदेव। किञ्च ''ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिरि''[10] त्यादिप्रथितेषु कालिदासादिपद्येषु स्वभावोक्तिं विहाय कोऽन्योऽलङ्कार: पदं धत्ते। तस्मादलङ्कारपितामहेन भामहेन स्वभावोक्तेरनुपेक्षणमेव युक्तिसङ्गतम्।

आचार्यदण्डी तु वाङ्मयस्यैव स्वभावोक्तिर्वक्रोक्तिरिति द्वेधा विभागं करोति। तत्र नानावस्थासु विद्यमानानां पदार्थानां यथार्थरूपस्याभिव्यञ्जिकालङ्कृति: स्वभावोक्ति:। जातिगुणक्रिया-द्रव्यात्मकवर्णनाच्चतुर्धा सा। शास्त्रेष्वस्या एव साम्राज्यं किन्तु काव्येष्वपि न्यूनं महत्वं नास्ति। इयमाद्यालङ्कृति:। तद्यथा -

**नानावस्थं पदार्थानां रूपं साक्षाद्विवृण्वती।**
**स्वभावोक्तिश्च जातिश्चेत्याद्या सालङ्कृतिर्यथा॥**

**जातिगुणक्रियाद्रव्यस्वभावाख्यानमीदृशम्।**
**शास्त्रेष्वस्यैव साम्राज्यं काव्येष्वप्येतदीप्सितम्[11]॥**

तथापि लोकोत्तरवक्रकविव्यापारशालिनी वक्रोक्ति: श्रेष्ठत्वादुपयोगिनी। उद्भटोऽपि स्वभावोक्तिं निरूपयति। क्रियाप्रवृत्तस्य बालमृगादेर्हेवाकस्य स्वभावस्य वर्णनमेव स्वभावोक्ति: -

**क्रियायां सम्प्रवृत्तस्य हेवाकानां निबन्धनम्।**
**कस्यचिन्मृगडिम्भादे: स्वभावोक्तिरुदाहृता[12]॥**

रुद्राटाचार्येणालङ्कारा: वास्तवौपम्यातिशयश्लेषेषु चतुर्धा विभज्य निरूपिता:। तत्र वास्तवेषु प्रमुखोऽलङ्कारोऽस्ति स्वभावोक्ति:। इयमेव जातिरप्युच्यते। वास्तवे वस्तुन: स्वरूपस्य यथार्थवर्णनमुपस्थाप्यते। येन पुष्टार्थत्वं विभ्रदयमलङ्कारश्चमत्कारार्थमुपमादीनलङ्कारान्नापेक्षते। तद्यथा-

**वास्तवमपि तज्ज्ञेयं वस्तुस्वरूपकथनं यत्।**
**पुष्टार्थमपि विपरीतं निरूपममनतिशयमश्लेषम्[13]॥**

रुद्रटकृतमेतद्विवेचनं वस्तुगतसौन्दर्यस्य व्याख्यानमस्ति। वस्तुगतसौन्दर्यस्येदं तात्पर्यं यद्वस्तुसहजातं रूपमेव कविभि: प्रस्तुतं भवेदिति। तत्र कल्पनाया भावनाया वा साहाय्येन बाह्यसौन्दर्यस्य अपेक्षा नास्ति। समुत्प्रेक्षणजनिताप्रस्तुतवस्तुसंविधानं विनैव पदार्थनिष्ठरामणीयकस्याभिव्यञ्जनमेव रुद्रटाभिमतं वास्तवं ज्ञेयम्।

रुद्रटव्याख्यानकृन्नमिसाधु: जातिं विवृण्वन् स्पष्टतरं स्फुटीकरोत्यमुमर्थम् -

**जातिस्त्वनुभवनं जनयति यत्र परस्थं स्वरूपं वर्ण्यमानमेवानुभवमिवैतीति स्थितम्।**

जातिर्हि तादृशं शब्दचित्रमुपस्थापयति येन पाठकः श्रोता वा साक्षादनुभवति पदार्थम्। साक्षाद्दर्शनमिव जातिः स्वभावोक्तिर्वानन्दमुपजनयतीति भावः। इदमेव पुष्टार्थत्वं विवक्षति रुद्रटः।

आचार्यवामनः नाङ्गीकरोति स्वभावोक्तिं किन्त्वसौ दशविधशब्दार्थगुणेष्वर्थव्यक्तिं स्वीकरोति। वस्तुस्वभावस्फुटत्वमर्थव्यक्तिः। तदभिन्नस्वरूपा स्वभावोक्तिरिति सम्भवतो वामनेनोपेक्षिता। मम्मटादित्रिगुणवादिभिरर्थव्यक्तिः स्वभावोक्तावेवान्तर्भाविताऽपि।

ध्वनिसम्प्रदायप्रवर्तका आनन्दवर्द्धनाचार्या यद्यपि नालङ्कारं निरूपयन्ति तथापि स्वभावोक्तेः सत्त्वमङ्गीकुर्वन्तिस्म। एते हि द्वितीयोद्योते ध्वन्यालोकस्य प्रकृतरसपरिपोषानुगतत्वेन शाकुन्तलीयं ''चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीम्''[14] इत्याद्युदाहतवन्तः। लिखन्ति च तत्र – ''**अत्र हि भ्रमरस्वभावोक्तिरलङ्कारो रसानुगुणः**[15]।

भोजेन सरस्वतीकण्ठाभरणे जातिनाम्ना स्वभावोक्तेर्व्युत्पत्तिमूलमर्थं समाहृत्य लक्षणं प्रस्तुतम् –

**नानावस्थासु जायन्ते यानि रूपाणि वस्तुनः।**
**स्वेभ्यः स्वेभ्यो निसर्गेभ्यस्तानि जातिं प्रचक्षते[16]॥**

सा जातिरलङ्कारो यत्र स्वभावतः पदार्थाः विविधास्ववस्थासु जायन्त इति भोजमतम्। स जातेरर्थव्यक्तेर्भेदमपि स्पष्टीकरोति। तन्मतेनार्थव्यक्तौ वस्तुनः सार्वकालिकं स्वरूपं वर्ण्यते जातौ तु अवस्थाविशेषे जायमानस्य रूपस्यैवेति विशेषः। तद्यथा –

**अर्थव्यक्तेरियं भेदमियता प्रतिपद्यते।**
**जायमानप्रियं वक्ति रूपं सा सार्वकालिकम्[17]॥**

भोजेन वाङ्मयं त्रिधा विभक्तम् – वक्रोक्तिः रसोक्तिः स्वभावोक्तिश्चेति तन्मतेनालङ्कारप्रधानं वाङ्मयं वक्रोक्तिमयम्, रसभावादिप्रधानं रसोक्तिमयम्, गुणप्रधानं स्वभावोक्तिमयमिति। एवं विधे विभाजने प्रवृत्तस्य भोजस्य प्रयासो रसालङ्कारगुणसम्प्रदायानां समन्वयोन्मुखः परिलक्ष्यते परन्तु नायं तर्कमूलकत्वाभावात् ग्राह्योऽभूत्।

किन्तु यदि तर्काश्रितवस्तुसिद्धिं प्रत्याग्रहं विहाय वस्तुस्थितिर्विचार्यते तर्ह्याधुनिकसमालोचनाशास्त्रदृष्ट्या भोजसम्मतं विभाजनं सर्वथोपयोगि। सत्यम् भावः कल्पना चेति त्रिविधं तावत् काव्यतत्त्वम्। साहित्यस्य विविधरूपेष्वेतेषामुपस्थितिरनुभूयते। तत्र सहजोऽर्थः सत्येनाभिमतः। क्वचिद्धि जीवनस्य जगतो वा प्रस्तुतस्य रूपस्य चित्रणं प्रधानं भवति। एतदेव भोजस्य स्वभावोक्तिस्थलेऽभिमतम्। रत्यादिभावस्य प्राधान्ये भोजो रसोक्तिं स्वीकरोति। यत्र पुनः कल्पनाया समुत्प्रेक्षणाया वा प्रामुख्यं तत्र वक्रोक्तिरस्ति। कविर्हि प्रस्तुतापेक्षयाप्रस्तुतस्य संविधाने प्रयत्नवान् कदाचिदवलोक्यते। इदानीमलङ्कृतं काव्यं वैदग्धयभङ्गीभणितिरूपां वक्रोक्तिं विभ्रद् विजृम्भते। दण्डी भोजश्च वक्रोक्तिरूपेण वाङ्मये एतदेव पश्यतः।

तदेवं मुनेर्भरतादारभ्य भोजराजपर्यन्तं स्वाभाविकवर्णनाश्रितस्य तन्नामालङ्कारस्य महत्त्वमूरीकृतं स्पष्टतरमुपलभ्यते। भोजस्य समकालीन एव राजानककुन्तकः सर्वमुपेक्ष्य स्वभावोक्तेः सयुक्ति निरासः कृतः। स हि वक्रोक्तिजीवितस्य प्रथमोन्मेष एव शोभाशालितां प्रत्यन्यूनानतिरिक्तत्वेनान्योन्यस्पर्धया स्थितयोः सहितयोः शब्दार्थयोरलङ्कार्यत्वं (काव्यत्वम्) वैदग्धभङ्गीभणितिस्वभावायाः बहुविधायाः (मूलतः षड्विधायाः) वक्रोक्तेश्चालङ्कारत्वमिति स्थिरीकृतवान्। अतस्तन्मतेन बालादिगतस्य गुणक्रियादिवर्णनस्यालङ्कार्यत्वमेव नत्वलङ्कारत्वमिति स्वभावोक्तिं निराकरोत्यसौ। तद्यथा –

**उभावेतावलङ्कार्यौ तयोः पुनरलङ्कृतिः।**
**वक्रोक्तिरेव वैदग्धयभङ्गीभणितिरुच्यते॥**

अलङ्कारकृतां येषां स्वभावोक्तिरलङ्कृतिः।
अलङ्कार्यतया तेषां किमन्यदवतिष्ठते॥

स्वभावव्यतिरेकेण वक्तुमेव न युज्यते।
वस्तु तद्रहितं यस्मान्निरूपाख्यं प्रसज्यते।
शरीरं चेदलङ्कारः किमलङ्कुरुतेऽपरम्।
आत्मैव नात्मनः स्कन्धं क्वचिदप्यधिरोहति॥

भूषणत्वे स्वभावस्य विहिते भूषणान्तरे।
भेदावबोधः प्रकटस्तयोरप्रकटोऽथवा॥

स्पष्टे सर्वत्र संसृष्टिरस्पष्टे सङ्करस्तथा।
अलङ्कारान्तराणाञ्च विषयो नावशिष्यते[18]॥

अयमाशयः। स्वभावोक्त्यलङ्कारे वर्ण्यवस्तुनः जातेर्गुणस्य क्रियाया वा रम्यं वर्णनं क्रियते। तच्च वर्णनं काव्यरूपत्वादलङ्कार्यम्। शब्दार्थौ काव्यमितिरीत्या जातिगुणक्रियाद्रव्यात्मक-चतुष्टयशब्द-प्रवृत्तिनिमित्तकतयार्थरूपत्वात्काव्यशरीरैकदेशरूपः स्वभावोक्त्यलङ्कारः। तदेवं स्वभावोक्तेः स्वयमलङ्कर्तुं योग्यत्वादलङ्कार्यत्वमेव युक्तम्। ये पुनरालङ्कारिका दण्डिप्रभृतयः स्वभावोक्तेरलङ्कार्यात्पृथगलङ्कारत्वमिच्छन्ति तेषां नयेऽलङ्कार्यमेव नूनमलङ्कारत्वेन स्थाप्यते। तन्मताभ्युपगमे स्वभाववर्णनामयस्य स्वभावोक्त्यलङ्कारस्य सर्वत्र सत्त्वादलङ्कारात्पृथगलङ्कार्यं किमवशिष्यते न किमपीति प्रथम आक्षेपः। वस्तुनः लोकोत्तरवर्णनमेव काव्यं, तच्च वर्णनं वस्तुस्वभावस्य जातिगुणक्रियाद्रव्यात्मकस्य कथनं विना न सम्भवति। स एव कथितः स्वभावो यद्यलङ्कार्यत्वं विहायालङ्कारतां प्रतिपद्यते तर्हि नूनं स्वभावं विनैव वर्णनाभरः समापतति। एवं सति तु निखिलमेव जागतिकं वर्ण्यं वस्तु निरूपाख्यमवर्णनीयं भवेत्। स्वभावं विना वर्णनमसम्भवं वर्णिते स्वभावेऽलङ्कार्यत्वं नत्वलङ्कारत्वमिति द्वितीयाक्षेपसारः। अपरापि महती समस्या विद्यते। वस्तुनो वर्ण्यमानः काव्यशरीरभूतः स्वभाव एव तदलङ्कारवादिनां नये यद्यलङ्कारस्तर्ह्यसौ स्वभिन्नं किमलङ्कार्यमलङ्करिष्यति। अलङ्कारभिन्नस्यालङ्कार्यस्य तन्मतेऽभावात्। स एव स्वभावोऽलङ्कारः स एव चालङ्कार्यमिति तु नैव वक्तुं शक्यते। न खल्वतिचतुरोऽपि नट आत्मनः स्कन्धामधिरोहति। तस्मादलङ्कार्यालङ्कारयोः पार्थक्येन भाव्यमेवेति तृतीयाक्षेपरहस्यम्। स्वभावस्यालङ्कारत्वं स्वीकुर्वन्तु नामालङ्कारिकाः, तखिन्नमलङ्कारान्तरमपि च क्वचित्कल्पयन्तु ते परन्त्विदानीं महत्तरा समस्या समायास्यति। स्वभावं विनाख्यातुमशक्यत्वात् सर्वत्र पद्येषु वर्णनायां स्वभावस्य च विद्यमानत्वादलङ्कारान्तराणां तदलङ्कर्तुं समर्थानां सत्त्वे तत्र स्वभावाख्यालङ्कारेण सहान्येषामलङ्काराणां सापेक्षनिरपेक्षस्थितत्वे सङ्करस्य संसृष्टेर्वालङ्कारस्य सत्वं तेनैव च व्यपदेशार्हत्वं युक्तम्। एवं सङ्करः संसृष्टिश्चेति द्वावेवालङ्कारौ सम्भवतः, तदन्येषामुपमादीनां निर्विषयत्वप्रसङ्गः। निष्कर्षतः नास्त्येव स्वभावोक्तिरलङ्कार इति कुन्तकमतम्।

आचार्यकुन्तकस्य स्वभावोक्तिविषयकं मतमिदं ग्राह्यं नाभूत्। न हि केनापि परवर्तिनालङ्कारिकेण स्मरणमपि कृतमस्य। कुन्तकमतमुपेक्ष्य सर्वैरपि मम्मटादिभिराचार्यैः स्वभावोक्तिरर्थालङ्कारेषु सादरं प्रतिष्ठापितः। किञ्च ध्वनिध्वंसबद्धपरिकराः महिमभट्टमहोदयाः स्वभावोक्तिं समर्थयन्तः कुन्तकमतं दूषितवन्तः ते लिखन्ति–

कथं तर्हि स्वभावोक्तेरलङ्कारत्वमिष्यते।
न हि स्वभावमात्रोक्तौ विशेषः कश्चनानयोः॥

उच्यते वस्तुनस्तावद्द्वैरूप्यमिह विद्यते।
तत्रैकमस्य सामान्यं यद्विकल्पैकगोचरः॥

स एव सर्वशब्दानां विषयः परिकीर्तितः।
अतएवाभिधेयं ते सामान्यं बोधायन्त्यलम्।।

विशिष्टमस्य यद्रूपं तत्प्रत्यक्षस्य गोचरः।
स एव सत्कविगिरां गोचरः प्रतिभाभुवाम्।।

यतः –

रसानुगुणशब्दार्थचिन्तास्तिमितचेतसः।
क्षणं स्वरूपस्पर्शोत्था प्रज्ञैव प्रतिभा कवेः।।

सा हि चक्षुर्भगवतस्तृतीयमिति गीयते।
येन साक्षात्करोत्येष भावांस्त्रैलोक्यवर्तिनः।।

इत्यादिप्रतिभातत्त्वमस्माभिरूपपादितम्।
शास्त्रे तत्त्वोक्तिकोशाख्य इति नेह प्रपञ्चितम्।।

अर्थस्वभावस्योक्तिर्या सालङ्कारतया मता।
यतः साक्षादिवाभान्ति तत्रार्थाः प्रतिभार्पिताः।।

सामान्यस्तु स्वभावो यः सोऽन्यालङ्कारगोचरः।
म्लिष्टमर्थमलङ्कर्तुमन्यथा को हि शक्नुयात्।
वस्तुमात्रानुवादस्तु पूरणैकफलो मतः[19]।।

महिमाचार्यः कुन्तककृतानामाक्षेपाणामतीव समुचितमुत्तरमकरोत्। वस्तुनः स्वभावमात्रस्योक्तिर्नास्ति स्वभावोक्तिः, सा तु पूरणैकफला दोषरूपैव। वस्तुतस्तु वस्तुनः सामान्यं विशिष्टञ्चेति रूपद्वयं विद्यते। तत्र सामान्यस्य दर्शनं सर्वैः क्रियते। एतदलङ्कार्यमितिवक्तुं शक्यते। इदं सामान्यं रूपं सामान्यमभिधेयमपि बोधायत्यतः सर्वग्राह्यत्वमस्य। किन्तु विशिष्टं यद्वस्तुस्वरूपं तद्धि प्रत्यक्षस्य विषयः। प्रतिभावतां सत्कवीनां वचसि तदेवोपलभ्यते। रसानुगुणशब्दार्थचिन्तैकतानचित्तस्य कवेर्येयं भगवच्छङ्कर तृतीयनेत्रकल्पा प्रज्ञाख्या प्रतिभा सैव पश्यति तद्विशिष्टं वस्तुरूपम्। तस्यैवाख्यानं स्वभावोक्तिरलङ्कारः। यतोहि कविशक्त्यर्पिताः पदार्थाः साक्षादिव चक्षुषोः पुरः परिस्फुरन्त इवाभान्ति। एतदेव रूपं वस्तुनः स्वभावोक्तिविषयः। सामान्यं पुनर्यद्वस्तुस्वरूपं तद्धि नूनमन्यालङ्कारैरलङ्क्रियते। अन्यथा त्वव्यक्तस्य पदार्थस्यालङ्करणं कथं भवेन्नाम।

महिमभट्टस्य तदनुयायिनां हेमचन्द्रमाणिक्यचन्द्रप्रभृतीनां च मतेन कुन्तको सामान्यं विशिष्टञ्वेति वस्तुस्वरूपस्य रहस्यमज्ञात्वैव स्वभावोक्तिविषये तादृशं आक्षेपमकरोत्। स्वभावोक्तेः समर्थने महिमभट्टादधिकं समीचीनमुत्तरं नैव कर्तुं शक्यते। अतएव परिवर्तिनः आचार्याः केवलं स्वभावोक्तिलक्षणे तत्तद्विशेषणैः परिष्कारमेव कृतवन्तः। तथाहि –

**स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम्[20]**
**सूक्ष्मवस्तुस्वभावयथावद्वर्णनं स्वभावोक्तिः।**

**इह वस्तुस्वभाववर्णनमात्रं नालङ्कारः। तत्त्वे सति सर्वं काव्यमलङ्कारि स्यात्। न हि तत्काव्यमस्ति यत्र वस्तुस्वभाववर्णनं न विद्यते। तदर्थं सूक्ष्मग्रहणम्। सूक्ष्मः कविमात्रस्य गम्यः। अतएव तन्निर्मित इव यो वस्तुस्वभावस्तस्य यथावदन्यूनानतिरिक्तत्वेन वर्णनं स्वभावोक्तिरलङ्कारः।[21]**

**स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनम्[22]।**

पण्डितराजेन परित्यक्तैव स्वभावोक्तिः। अथवा निरूपितोऽशः रसगङ्गाधरस्यानुपलब्धचर एव भवेत्।

तदेवं प्रायश आलङ्कारिकाः वस्तुगतसौन्दर्यस्य रम्यवर्णनस्थले स्वभावोक्तिं स्वीकुर्वन्त्येव। कुन्तक एवैकाकी तन्निषेधकर्ता। अत्रेदं विचार्यते - कुन्तको हि प्रथमोन्मेषे काव्यलक्षणप्रस्तावे -

**शब्दो विवक्षितार्थैकवाचकोऽन्येषु सत्स्वपि।**
**अर्थः सहृदयाह्लादकारिस्वस्पन्दसुन्दरः॥**

**उभावेतावलङ्कार्यौ तयोः पुनरलङ्कृतिः।**
**वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते॥**[23]

इत्यादिप्रसङ्गेन वैदग्ध्यभङ्गीभणितिरूपायाः वक्रोक्तेरलङ्कारत्वं व्यवस्थाप्य रम्यसहजस्वाभाविक-धर्मवर्णनामयस्य स्वभावोक्त्यलङ्कारस्य निराकरणं कृतवान्। परन्तु तृतीयोन्मेषे वस्तुवक्रता प्रस्तावे -

**उदारस्वपरिस्पन्दसुन्दरत्वेन वर्णनम्।**
**वस्तुनो वक्रशब्दैकगोचरत्वेन वक्रता॥**

**वस्तुनो वर्णनीयतया प्रस्तावितस्य पदार्थस्य यदेवं विधात्वेन वर्णनं सा तस्य वक्रता वक्रत्वविच्छित्तिः। किं विधात्वेनेत्याह-उदारस्वपरिस्पन्दसुन्दरत्वेन। उदारः सोत्कर्षः सर्वातिशायी स्वपरिस्पन्दः स्वभावमहिमा तस्य सुन्दरत्वं सौकुमार्यातिशयस्तेन अत्यन्तरमणीय-स्वाभाविकधर्मयुक्तत्वेन प्रतिपादनम्। तदिदमुक्तं भवति यदेवं विधे भावस्वभावसौकुमार्यवर्णनप्रस्तावे भूयसां न वाच्यालङ्काराणामुपमादीनामुपयोगयोग्यता सम्भवति, स्वभावसौकुमार्याति- शयम्लानताप्रसङ्गात्।**[24]...

इत्यादि सन्दर्भेण यद्वस्तुवक्रत्वं प्रदर्शितवांस्तद्वस्तुतोऽन्यैरभ्युपगतं स्वभावोक्तिस्वरूपमेवास्ति। इमामेवाशङ्कां सम्भाव्यमानामुखाव्य स्वयं समादधात्यपि कुन्तकाचार्यः, परन्तु तत्रेदं स्पष्टीभवत्येव यत् सः परैरभ्युपगतां स्वभावोक्तिं कविप्रतिभाप्रसूतचमत्कारविहीनवस्तुगतसहजधर्मवर्णनात्मकत्वमारोप्य दूषितवानिति। तद्यथा -

**ननु च सैषा सहृदयहृदयहारिणी स्वभावोक्तिरलङ्कारतया समाम्नाता तस्मात्किंतद्दूषण-दुर्व्यसनप्रयासेन। यतस्तेषां सामान्यवस्तुधर्ममात्रमलङ्कार्यम्, सातिशयस्वभावपरिपोषणमलङ्कारः प्रतिभासते। तेन स्वभावोक्ते- रलङ्कारत्वमेव युक्तियुक्तमिति ये मन्यन्ते तान् प्रति समाधीयते -**

**यदेतन्नातिचतुरस्रम्, यस्माद् गतिकगतिन्यायेन काव्यकरणं न यथाकथञ्चिद- नुष्ठेयतामर्हति, तद्विदाह्लादकारिकाव्यलक्षणप्रस्तावात्। किञ्चानुत्कृष्टधर्मयुक्तस्य वर्णनीयस्यालङ्करणमप्य-समुचितभित्तिभागोल्लिखिता-लेख्यवन्न शोभातिशयकारितामावहति। तस्मादत्यन्तरमणीयस्वाभाविक-धर्मयुक्तं वर्णनीयं वस्तु परिग्रहणीयम्।**[25]

एतेन स्पष्टमिदं यदन्यैरभ्युगता स्वभावोक्तिरेव कुन्तकस्य वस्तुवक्रता। विचारणीयं त्विदं यत्स यस्य रमणीयस्वाभाविकधर्मयुक्तवस्तुपरिग्रहस्याग्रहं करोत्यलङ्कार्यत्वस्य = काव्यत्वस्य ग्रहणाय किं तद्विपरीतं भामहादिभिर्वस्तुतोऽभ्युपगतमिति। भामहो हि वस्तुनो यथावद्वर्णने वार्तां स्वीकरोति न तु स्वभावोक्तिम्। तन्मतेनापि स्वभावोक्तौ वैदग्ध्यभङ्गीभणितिव्यभिचारेण भवत्येव। वामनोऽपि अर्थव्यक्तिगुणान्वितैव स्वभावोक्तिर्वर्तिया भिद्यत इति वदत्येव। दण्डी अपि ''साक्षाद्विवृण्वती'' इति विशेषणेन किमपि वैशिष्ट्यमिच्छत्येव स्वभावोक्तौ। कुन्तकस्य समकालिकयोः भोजमहिमभट्टयोरपि मतं विपरीतं नास्ति। तदेवं स्वभावोक्तौ सत्यपि स्वाभाविक-धर्मवर्णने चमत्कारस्य लालित्यस्य च सत्त्वमावश्यकम्। कविप्रतिभैव तत्र चमत्कारमुत्पादयति यद्वशात् वर्ण्यमानं वस्तु पुरः परिस्फुरदिव प्रीतिमुपजनयति। एतत्सर्वेषां स्वभावोक्तिपक्षपातिनामालङ्कारिकाणां सम्मतमस्ति। तदेवं वस्तुतः कुन्तकस्याग्रह एवायं यत्सः स्वभावोक्तिं सहजवस्तुवक्रतानाम्ना स्वीकरोति। अतएव सः प्रौढिवादेन

स्वीकरोत्यपि स्वभावोक्तिं कारिकावृत्त्युपसंहारावसरे। तद्यथा –

**यदि वा प्रस्तुतौचित्यमाहात्म्यान्मुख्यतया भावस्वभावः सातिशयत्वेन वर्ण्यमानः स्वमहिम्ना भूषणान्तरासहिष्णुः स्वयमेव शोभातिशयशायित्वादलङ्कार्योऽप्यलङ्करणमित्यभिधीयते तदयमस्माकीन एव पक्षः। तदतिरिक्तवृत्तेरलङ्कारान्तरस्य अलङ्कारतात्पर्येणाभिधानान्न वयं विवदामहे।**[26]

तदेवं स्वभावोक्तिविषयक चिन्तनैकफलोऽयं निबन्धः प्रस्तुतः। बहुवक्तव्यविशदीकरणीय एषः पृथक्प्रयत्नमर्हति। गुणहीनोऽप्ययं सखिरनुपहसनीयो भवेदिति प्रत्येमि। यतो हि –

**यद्वा निर्गुणमप्यर्थमभिनन्दन्ति साधवः।**
**प्रणयिप्रार्थनाभङ्गसंविधानामशिक्षिताः**[27]**॥**

**सन्दर्भटिप्पण्यः**

1. काव्यप्रकाशः 10/11
2. स्वभोक्तिमाह–स्वभावोक्तिरिति। स्वभावश्चतुर्विधः जातिगुणक्रियाद्रव्यभेदात्। – काव्यप्रकाशटीका-सारदीपिका - 1/111
3. का.प्र. टीका – सारबोधिनी 10/111
4. का.प्र. उदा. 492
5. नाट्यशास्त्रम् 16/106
6. नाट्यशास्त्रम् 16/23-24
7. काव्यालङ्कारसूत्रम्, भामहः – 2/93-94
8. काव्यालङ्कारसूत्रम्, भामहः- 2/85
9. काव्यालङ्कारसूत्रम्, भामहः- 1/36
10. अभिज्ञानशाकुन्तलम् – 1/7
11. काव्यादर्श 2/8,13
12. काव्यालङ्कारः, उखटः –3/5
13. काव्यालङ्कार, रुद्रटः 7/10
14. अभिज्ञानशाकुन्तलम् – 1/24
15. धवन्यालोकः – 2/19
16. सरस्वतीकण्ठाभरणम् 3/4
17. सरस्वतीकण्ठाभरणम् 3/5
18. वक्रोक्तिजीवितम् 1/10-15
19. व्यक्तिविवेकः 2/113-22
20. काव्यप्रकाशः – 10/111
21. अलङ्कारसर्वस्वम्, सूत्रवृत्ति पृ. 177
22. साहित्यदर्पणः – 10/92
23. वक्रोक्तिजीवितम् – 1/9-10
24. वक्रोक्तिजीवितम् – 3/1
25. वक्रोक्तिजीवितम् – 3/1 वृत्तिग्रन्थः
26. वक्रोक्तिजीवितम् – 3/1 वृत्तिग्रन्थः
27. न्यायमञ्जरी, जयन्तभट्टः उपक्रम श्लोक – 10

**सन्दर्भग्रन्थसूची**


1. काव्यप्रकाश-सारदीपिका, सम्पा.- तपसी एस. नन्दी, गुजरात यूनिवर्सिटी अहमदाबाद - 1976
2. काव्यप्रकाश - सारबोधिनी, डा. जगन्नाथपाठक एवं डा. गोपराजुरामा (टीकात्रयसंवलित) प्रकाशक - गङ्गानाथझा केन्द्रीय संस्कृत विद्यापीठ, इलाहाबाद - 2, 1976
3. काव्यालङ्कारसूत्रम् - भामह
4. काव्यालङ्कारसूत्रम् - उखट अनुवादक - डॉ. रमण कु. शर्मा, विद्यानिधि प्रकाशन, दिल्ली, प्र.सं. - 2001
5. काव्यालङ्कारसूत्रम् - रुद्रट व्याख्याकार - डॉ. सत्यदेव चौधरी परिमल पब्लिकशन्स दिल्ली द्वितीय सं. 1990
6. धवन्यालोकः, काव्यमाला - 25, पुनर्मुद्रित - नई दिल्ली, 1983
7. सरस्वतीकण्ठाभरणम् , काव्यमाला Edited and franslater -Sundari Siddhartha Motilal Banarsidass Publishera PVT. LTD Delhi, First Addition - 2009
8. वक्रोक्तिजीवितम् - कुन्तक Edited - Sushil Kumar De, Firma K.L.Mukhopadhyay Calcutta, Third Edition - 1961
9. व्यक्तिविवेकः, चौखम्वा संस्कृत सीरीज, वाराणसी - 1994
10. अलङ्कारसर्वस्वम् , काव्यमाला - 35, भारतीय विद्याभवन - दिल्ली-वाराणसी, पुनर्मुद्रित - 1982
11. साहित्यदर्पणः, चौखम्वा संस्कृत सीरीज आफिस, वाराणसी - 1, 1967
12. नाट्यशास्त्रम्, काव्यमाला-42, भारतीय विद्या प्रकाशन, दिल्ली-वाराणसी - 1983
13. न्यायमञ्जरी (जयन्तभट्ट) उपक्रमश्लोक-10 चौखम्वा विद्याभवन, वाराणसी-द्वितीय संस्करण - 1971
14. काव्यादर्शः - दण्डी, व्याख्याकार - श्रीशिवनारायण शास्त्री, परिमल पब्लिकेशन्स दिल्ली प्र.सं. - 1988
15. अभिज्ञानशाकुन्तलम् - डा. कपिलदेवद्विवेदी, प्रकाशक - रामनारायणविजयकुमार इलाहावाद - 2, संस्करण 1998।


**डा. विश्वम्भरनाथ गिरिः**

**सह-आचार्य, राष्ट्रियसंस्कृतसंस्थानम् गंगानाथझापरिसरः, इलाहाबाद**



# वेदवाङ्मयप्रभा

सच्चिदानन्द तिवारी

'वेदःशिवश्शिवो वेदः वेदाध्यायी सदाशिवः।
तस्मात्सर्वप्रयत्नेन वेदमेव सदा जपेत्।।'

'वेदोऽखिलो धर्ममूलम्' इत्यशेषधर्ममूलभूतो भवति वेद इति मनुरवोचत्। स एव धर्मो जगत्प्रतिष्ठाहेतुरिति 'धर्मो विश्वस्य जगतः प्रतिष्ठा' इत्याम्नायते आम्नायः। विद्धातुनिष्पन्नोऽयं वेदशब्दो ज्ञानार्थं प्रकाशयति। तथापि वेदपदश्रवणसमनन्तरं ऋगादिमन्त्रब्राह्मणात्मको वेद एव प्रत्ययविषयो भवति। तस्मात् अखिलेऽस्मिन् भूमण्डले वेदपदं रूढ्या ऋगादीनेव बोधयति। सुप्रथिताश्चत्वारो वेदाः ऋगादयः। वेदेषु अन्तर्लीननिगूढतत्वार्थामृतान्वेषिणो महान्तः प्रज्ञामे धादिसम्पत्सम्पन्नाः सायणभट्टभास्करमहीधरोव्वटाद्याचार्याः भाष्यमन्थानेन त्रयीरत्नाकरममन्थिषुः। अन्यच्च पाश्चात्यदर्शनतत्त्वविशारदा म्याक्सिमूलर्म्याक्डोणेल् इत्यादयस्तत्रनिहित-तत्त्वान्वेषिण आङ्गलभाषया व्याख्यानं कृत्वा सर्वत्र तन्महत्त्वमतन्वन्। जनमानसक्रियाकलापमालोच्य देशकालानुकूलं दयानन्दसरस्वतीप्रभृतयोऽपि व्याख्यानमकुर्वन्। गवेषकाणामधुना वेदः केन्द्रस्थानं भवति।

भाषाशास्त्रज्ञाः दार्शनिकाश्च प्रायशः सर्वे स्वस्वविषयानुमतमनुसन्धानाय वेद एव रमन्ते। तर्हि महानयं वेदः क इति ईषद्विवृणोति-

विष्णुदर्भमुष्टिज्ञानाद्यर्थप्रतिपादको वेदशब्दः। किन्तु अनादितात्पर्यवशात् वेदशब्दादृगादीनामेव बोधो जायते। तत्रैवार्थे 'श्रुतिः स्त्री वेद आम्नायस्त्रयी' इति अमरकोशकारः (शब्दादिवर्गः पृ-319) प्रमाणयति। 'मीनशरीरावच्छेदेन भगवद्वचनम्, धर्मब्रह्मप्रतिपादकमपौरुषेयवाक्यम्, ब्रह्ममुखनिर्गतधर्मज्ञापकम्' इत्यादिवेदव्याख्यानं (श.क.द्रु. पृ.-496) दृश्यते। यज्ञपरिभाषायां आपस्तम्बसूत्रकारः 'मन्त्रब्राह्मणात्मको वेद' इत्यब्रवीत्। सायणाचार्यस्तु वेदपदार्थं प्रकाशयति-इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेद इति।

'प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।
एवं विदन्ति वेदेन तस्माद्वेदस्य वेदता।।' (तै.सं.सा.भा.भू.पृ.-2)

शङ्करभगवत्पादः-'सर्वोऽप्ययं वेदः प्रत्यक्षानुमानाभ्यामनवगतेष्टानिष्टप्राप्तिपरिहारोपाय- प्रकाशनपरः सर्वपुरुषाणां निसर्गत एव तत्प्राप्तिपरिहारयोरिष्टत्वात्' इति (बृ.उ.शा.भा.प्र-1, ब्रा-1, पृ.-4)। शङ्करमिश्रः-'वेदत्वञ्च शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयकार्थकत्वे सति शब्दजन्यवाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वम्' इति (वै.द.उप.6.1.1, पृ.-222) इत्यादिविविधव्याख्यानपर्यालोचनेन प्रत्यक्षानुमानप्रमाणावेद्यार्थप्रतिपादकशब्दानां राशिरेव वेद इति निर्गलितार्थः सिध्यति। वेदोऽकर्तृक इति सनातनधर्मावलम्बिनां प्राज्ञां पारम्पर्यसम्प्रदायसम्मतमतम्। आधुनिकविचारधाराधारितान्तःकरणानां सकर्तृको वेद इति विपक्षविपरीतः पक्षः। अधुनिकानां सकर्तृको वेद इत्यत्र कर्त्ता क इति निश्चयो नाद्यापि संवृत्तः। किन्तु वेदेतरग्रन्थानां सान्दर्भिकवाक्यानुरोधेन तत्तत्कालीनभूगर्भसम्प्राप्तवस्तुपरिशीलनोत्तरसमुत्पन्ननिर्णयमाश्रित्य च भिन्नभिन्नकालनिश्चयपक्षमुद्भावयन्ति। परन्तु

अयमेव वेदकाल इति सुनिश्चयो नास्ति तेषाम्। नैकं कालमङ्गीकुर्वन्ति सर्वे ते। अतो वेदकालबोधकनानापक्षीयवाक्यात् वेदस्य कालोऽस्ति न वेति संशयो जायते। विप्रतिपत्तिवाक्यादपि संशयो भवति। संशयोत्पादकाः ते पक्षा इति भृशमवगन्तुं शक्यते। सकर्तृकः कश्चन पक्षः न्यायनयज्ञीयः। न्यायशास्त्रस्यायं सिद्धान्तः 'सर्वे शब्दाः अनित्याः। नाल्पज्ञः कर्तृकः सः। किन्तु नित्यः सर्वज्ञः प्रमादादिदोषरहितो य ईश्वरः, वेदकर्ता, तस्मात् पौरुषेयो वेद इति गौतमीयानां सङ्गतं मतम्। ईश्वरप्रणीतत्वादेव वेदस्य प्रामाण्यमभ्युपगच्छन्ति ते। 'मन्त्रायुर्वेदप्रामाण्यवत् तत्प्रामाण्यमाप्तप्रामाण्यात्' इति (गौ. सू. 2.1.68, पृ. 145)। 'बुद्धिपूर्वावाक्यकृतिर्वेदे', 'ब्राह्मणे संज्ञाकर्मसिद्धिर्लिङ्गम्', 'बुद्धिपूर्वो ददातिः', 'तथा परिग्रहः' इत्यादीनि वैशेषिकदर्शनसूत्राणि वेदवाक्यानां बुद्धिपूर्वजन्यत्वं सम्पादयन्ति। अर्थात् ईश्वरबुद्धिजन्यानि भवन्ति शब्दराशिरूपवेदवाक्यानि इति साधनेन ईश्वरकर्तृकत्वं सिद्धं वेदे (वै.द. 6.6.1-4, पृ. 222-223)। 'तद्वचनादाम्नायस्य प्रामाण्यम्' इति सूत्रं वेदस्य प्रामाण्यं बोधयति (वै.द.सू. 1.1.3, पृ. 7)। 'वेदः पौरुषेयो वेदत्वात् आयुर्वेदवत्', 'वेदः पौरुषेयो वाक्यत्वात् भारतादिवत्', 'वेदवाक्यानि पौरुषेयाणि वाक्यत्वात् अस्मदादिवाक्यवत्' इति (न्या. कु. स्त.5) 'कार्यायोजनधृत्यादेः' इति कारिकाव्याख्याने (पृ. 172) दिनकरीमुक्तावल्ल्यादिसर्वग्रन्थेपु ईश्वरकर्त्तृकत्वं वेदस्य साधयन्ति। तत्र पूर्वमीमांसकाः 'शब्दाः सर्वे नित्याः इति मन्यन्ते। तर्हि वेदस्य नास्ति कृतिजन्यत्वम्। तत्र नित्यत्वमेव वर्तते। अपौरुषेयः सः 'वेदापौरुषेयत्वाधिकरणे भाट्टदीपिकाकारः- 'सृष्टिप्रलयेश्वराद्यङ्गीकारे तु कल्पादौ प्रवचननिमित्ता श्रुतिः संभवतीत्यपौरुषेया एव वेदा इति (1.1.7 पृ. 13) 'वाचा विरूपनित्यया' इति (ऋ. वे. 8.75.6) 'अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा' इति स्मृतिश्च 'स्वयंभूरेष भगवान् वेदो गीतः स्वयंभुवा', 'शिवाद्या ऋषिपर्यन्ताः स्मर्तारोऽस्य न कारकाः' इति श्रुतिस्मृतिपुराणादिवचनैर्वेदानां नित्यत्वावगमेनेश्वरकर्तृकत्व- कल्पनायोगाच्च' इति अध्वरमीमांसाकुतूहलवृत्तौ (1.1.8. पृ. 18) 'वेदे तु पुरुषाभावाल्लिङ्गादिशब्दनिष्ठ एव। न हि वेदः पुरुषनिर्मितः। वेदस्याध्ययनं सर्वमित्यादिना वेदापौरुषेयत्वस्य साधितत्वात्' इति मीमांसान्यायप्रकाशः (पृ. 3)। अद्वैतवेदान्तसिद्धान्ते तु सच्चिदानन्दात्मकं ब्रह्म केवलं नित्यम्। तद्भिन्नानां वस्तूनां कस्यापि न नित्यत्वम्। तर्हि वेदनित्यत्वमनङ्गीकर्तॄणां तेषां श्रुतिरेव तत्र प्रमाणमिति मन्यन्ते। 'अस्य महतो भूतस्य निःश्वसितमेतदृग्वेद' इतयादि बृहदारण्कोपनिषद्वचनमस्ति। तथापि वेदस्यापौरुषेयत्वमभ्युपयन्ति ब्रह्मवादिनः। पौरुषेयत्वस्य व्याख्यानविशेषात्, तथाभूतं पौरुषेयत्वं वेदस्य सुतरां न सिद्ध्यतीति वेदान्ताभिमतम्। 'सजातीयोच्चारणानपेक्षोच्चारणविषयत्वं पौरुषेयत्वम्' (वे. प. आ. प. पृ. 135)। 'धाता यथा पूर्वमकल्पयदिति न्यायेन सर्गाद्यकाले परमेश्वरः पूर्वसर्गसिद्धवेदानुपूर्वीसमानानुपूर्वीकं वेदं विरचितवान्, न तु तद्विजातीयं वेदमिति न सजातीयोच्चारणानपेक्षोच्चारणविषयत्वं पौरुषेयत्वं वेदानाम्'। इति (वे. भा. आ. पृ. 135)। वेदः पौरुषेयोऽपौरुषेयो वा इत्यत्र भवतु नाम मतविभेदः परन्तु गौतमजैमिनिबादरायणमहर्षयः प्रामाण्यं तत्राभ्युपगच्छन्ति एव। सायणाचार्यस्तु वेदकर्तृत्वं चिन्तयति-

**'न कर्तृ ब्रह्म वेदस्य किं वा कर्तृ न कर्तृ तत्**
**विरूपनित्यया वाचेत्येवं नित्यत्ववर्णनात्।**
**कर्तृनिः श्वसिताद्युक्तेर्नित्यत्वं पूर्वसाम्यतः**
**सर्वावभासि वेदस्य कर्तृत्वात्सर्वविद्भवेत्॥''** इति।

'अनादिनिधना नित्ये'ति स्मृत्या नित्या वाक् ऋगादिवेद एवेति मतं निराकरोति- 'ब्रह्म वेदस्य कर्तृ भवितुमर्हति निःश्वसितन्यायेनाप्रयत्नोत्पत्यवगमात्.... प्रतिसर्गं पूर्वं साम्येनोत्पत्तेः प्रवाहरूपेण नित्यता' इत्यादि (तै.आ.उ. 9.1, सा.भा. पृ. 664)। अर्थात् ब्रह्मकर्तृको वेदः, घटादिकार्यं तु कर्तृकृतिजन्यं, प्रयत्नसाध्यम्। तथा न वेदः प्रयत्नमन्तरा वेदोत्पत्तिर्जाता, निःश्वसितन्यायेन, पूर्वस्मिन् कल्पे यथा वेदवाक्यानि उदात्तानुदात्तादिसहितानि, तथैव न्यूनातिरिक्तवैकल्यं विना उत्तरस्मिन् कल्पे वेदं सृजति, इत्यतो सकर्तृको वेद इत्याशयो सायणस्य। 'यस्य

निःश्वसितं वेदाः यो वेदेभ्योऽखिलं जगत्। निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्॥' इति मङ्गलश्लोकः भाष्यभूमिकायां दृश्यते। 'शास्त्रयोनित्वादिति बादरायणसूत्रभाष्ये महतः ऋग्वेदादेः शास्त्रस्यानेकविद्यास्थानोपबृंहितस्य प्रदीपवत्सर्वार्थावद्योतिनः सर्वज्ञकल्पस्य योनिः कारणं ब्रह्म' इति शङ्करभगवत्पादः (ब्र. सू. शा. भा. 1.1. 3. पृ. 96)। भाष्यांशादपि निर्गलितार्थस्तु ब्रह्मकर्तृकोऽस्ति वेदः।

वेदविभागप्रकारः- ऋगादिमन्त्राणां स्वरूपभेदेन चतुर्धा विभक्त इति वेदानुमतपक्षोऽयम्। विषयभेदमनुसृत्यापि क्वचिद्विभागः दृष्टिपथमागच्छति। 'अरेऽस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः, सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि निःश्वसितानि' (बृ.आ. उ. 2.4.10. पृ. 348)। तत्र शाङ्करभाष्ये 'ऋग्वेदो ......चतुर्विधं मन्त्रजातं, इतिहासः इत्युर्वशीपुरूरवसोः संवादादिरूर्वशी हाप्सरा' इत्यादिब्राह्मणमेव। पुराणमसद्वा इदमग्र आसीदित्यादि, विद्या-देवजनविद्या वेदः सोऽयमित्याद्या, उपनिषदः प्रियमित्येतदुपासीतेत्याद्याः, श्लोकाः-ब्राह्मणप्रभवा मन्त्रास्तदेते श्लोका इत्यादयः, सूत्राणि वस्तुसङ्ग्रहवाक्यानि वेदे तथा आत्मेत्येवोपासीतेत्यादीनि, अनुव्याख्यानानि मन्त्रविवरणानि, व्याख्यानानि अर्थवादाः, इतिहासाद्यष्टविधं ब्राह्मणम्' (पृ. 349) इतिहासपुराणश्लोकादिपदानां प्रसिद्धार्थस्तु न तत्राभिप्रेत इति प्रत्यवगत्यै भाष्यदप्रदर्शनम्। स्पष्टमत्र मन्त्राणामेव ऋगादिसंज्ञा, वेदांशब्राह्मणस्याष्टधा विभाग इति, 'मन्त्रब्राह्मणात्मको वेद इति - आपस्तम्बसूत्रकारस्याभिप्राय-समन्वयोऽत्र दृश्यते।

आनन्दगिरिव्याख्याने - 'सर्ववेदः कर्मकाण्डज्ञानकाण्डभेदेन द्विविधः। 'तद्युक्तं कर्मकाण्डवत् ज्ञानकाण्डस्यापि प्रामाण्यमिति' (शा.भा.आ.गि.व्या.पृ.4, बृहदारण्यकोपनिषदि)। सायणोऽपि-'वेदस्तावत् काण्डद्वयात्मकः पूर्वस्मिन् काण्डे नित्यनैमित्तिककाम्यनिषिद्धरूपं चतुर्विधं कर्म प्रतिपाद्यते। उत्तरकाण्डे ब्रह्मोपदेशो ब्रह्मोपास्तिश्चेत्युभयं प्रतिपाद्यते' इति (तै.भा.भू.पृ. 6)। मुण्ड्कोपनिषदि विभागरीतिरन्या वर्तते - 'द्वे विद्ये वेदितव्ये इति ह स्म यत् ब्रह्मविदो वदन्ति परा चैवापरा च। तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दः ज्योतिषमिति' (मु.उ.1.4-5 पृ.131)। 'कल्पो नाम सिद्धरूपप्रयोगप्रतिपादकग्रन्थः' अर्थात् भवतो द्वे विद्ये, ऋगादिवेदानां शिक्षादिषडङ्गानां च अपराविद्यात्वेन क्रोडीकृतो भवत्यस्यामुपनिषदि। भागवतविष्णुपुराणानि ऋगादिवेदप्रभेदं प्रज्ञापयन्ति। ऋगादिसंज्ञाधायकलक्षणस्वरूपं प्रख्यापयति तत्रभवान् जैमिनिमहर्षिः - 'तेषामृग्यत्रार्थवशेन पादव्यवस्था' (सू. 35), मन्त्राणां मध्येऽर्थवशेन यत्र गायत्र्यादिच्छन्दोवशेन पादव्यवस्था विद्यते सा ऋक् इति व्यवह्रियते। पादव्यवस्थावन्मन्त्रत्वं ऋक्त्वम्', 'गीतिषु समाख्या' (सू.36) रथन्तरादिषु गानेषु सामपदव्यवहारः। 'मन्त्रत्वसमानाधिकरणगीतित्वं सामत्वम्। 'शेषे यजुश्शब्दः' (सू. 37) ऋक्सामभिन्नत्वे सति मन्त्रत्वं यजुष्ट्वम्' इति ऋक्सामयजुषां लक्षणं लक्षितम्। (पूर्वमी. द. 2.1.14, भाट्टदीपिका पृ. 100) मन्त्रत्वव्याप्यऋक्त्वादिधर्मविभाजकलक्षणं त्वधिगतम्। किन्तु कोऽयं मन्त्रः ? किं तद्ब्राह्मणमिति जिज्ञासां निवर्तयति पूर्वमीमांसादर्शनम्-'लक्षणप्रमाणाभ्यां वस्तुसिद्धिरिति' कश्चन नियमः, मन्त्रस्य लक्षणासत्वे मन्त्रपदार्थबोधो न सुलभसाध्यः, अतस्तल्लक्षणं किमिति वक्तव्यं भवति, तत्रोच्यते-

ऋषयोऽपि पदार्थानां नान्तं यान्ति पृथक्त्वशः।
लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः॥' इति (सा.भा.पृ.35)

'तच्चोदकेषु मन्त्राख्या' (पू.मी.द. 1032) 'यत्राभियुक्तानां मन्त्रपदवाच्यत्वप्रकारिका उपस्थितिर्विषयता-सम्बन्धेन स मन्त्रः' इति लक्षणमस्ति मन्त्रस्य। 'वाच्यतावच्छेदकं च मन्त्रत्वमखण्डोपाधिर्वेदत्ववत्' इति भाट्टदीपिका (पृ.99)। 'शेषे ब्राह्मणशब्दः' (पू.मी.द. 10.33, पृ.99)। मन्त्रभिन्नवेदत्वं ब्राह्मणत्वमित्युपपन्नं मन्त्रब्राह्मणयोर्लक्षणम् (भा.दी)। 'अयमेव मन्त्र' इति याज्ञिकानां यत्र व्यवहारो विद्यते, तत्रैव मन्त्रत्वं वेदत्वव्याप्यधर्मात्मकमिति मन्त्रावगतिप्रयोजको याज्ञिकव्यवहार इति ध्येयम्। अत्र

सायणभाष्यं तु ऋग्वेदभाष्योपक्रमणिकायां तु विस्तृतव्याख्यानमकरोत्-'अहे बुध्निय मन्त्रं मे गोपाय' इत्यादि.. ..तस्मादभियुक्तानां मन्त्रोऽयमिति समाख्यानं लक्षणम्।

**'मन्त्रश्च ब्राह्मणश्चेति द्वौ भागौ तेन मन्त्रतः।**
**अन्यत् ब्राह्मणमित्येतद्भवेत् ब्राह्मणलक्षणम्।। ''** (जै.न्या.मा.2.1.8)

मन्त्रभिन्नं ब्राह्मणमिति स्पष्टम्। 'तस्मिन् वेदे केषुचिदभिधाय केषु वाक्येषु मन्त्र इति समाख्या सम्प्रदायविद्‌भिर्व्यवह्रियते 'मन्त्रानधीमहे' इति। मन्त्रव्यतिरिक्तभागे तु ब्राह्मणशब्दस्तैः व्यवहृतः' 'यद्‌ब्राह्मणानीतिहासान्.......मेदाहुतयः' इति (तै.आ.2.9.142) तथाभूतो मन्त्रस्त्रिविधः-'पादेन अर्थेन चोपेतावृत्तबद्धा मन्त्राः-ऋचः। गीतिरूपमन्त्राः सामानि। वृत्तगीतिवर्जितत्वेन प्रश्लिष्टपठितमन्त्रा यजूंषि' इति ऋगादिमन्त्राणां स्वरूपमपि भाष्ये स्पष्टम् (पृ. 35-38)।

अत्रान्यत्किञ्चिद्विचार्यते-केचन 'संहिता-ब्राह्मण-आरण्योपनिषत्-उपनिषत्' इति, केचन 'मन्त्रः, ब्राह्मणम्, आरण्यकम्, उपनिषदिति च' वेदस्य विभागं प्रदर्शयन्ति। तत्र 'आरण्यकम्, उपनिषदि'ति पृथक् द्वयोरस्तित्वं नास्तीति ममाभिचिन्तनम्। आरण्यकमपि उपनिषदेव, बृहदारण्यकोपनिषत् ऐतरेयारण्यकोपनिषत्, तैत्तिरीयारण्यकोपनिषदित्येव सर्वेषां भाष्यकाराणाञ्च व्यवहारोऽस्तीति भाष्यग्रन्थादेवावगच्छन्ति सर्वे। 'अरण्ये तदधीयीत' इत्यरण्येऽध्ययनविधिश्रवणात् तथा सम्प्रदायसत्त्वाच्चोपनिषत्सु केचनांशा आरण्यकोपनिषत्पदं भजन्ते। तथैव श्रूयते चारण्यके तैत्तिरीये सायणभाष्यमङ्गलश्लोके-

**'अरण्याध्ययनादेतदारण्यकमितीर्यते।**
**अरण्ये तदधीयीतेत्येवं वाक्यं प्रवक्ष्यते।।'**(6) इति।

अत उपनिषदोऽन्या काचन आरण्यकोपनिषदिति नास्त्येव। सा उपनिषत्सु अन्तर्भूता। अपि च सर्वा अपि उपनिषदः ब्राह्मणे वेदैकभागेऽन्तर्भवन्ति, अन्यथा मन्त्रब्राह्मणात्मको वेदः इत्युक्तत्वात् तत्रोपनिषत्पदाश्रवणात् उपनिषत्सु वेदत्वं न स्यात्, तस्मात् मन्त्रभिन्नब्राह्मणत्वं तासु वर्तते इति नितरां सिद्ध्यति। तत्प्रकाशयति च सायणाचार्यः- 'द्विविधं ब्राह्मणम्, विधिरर्थवादश्चेति। विधिरपि द्विविधः अप्रवृत्तप्रवर्तनम् अज्ञातार्थज्ञापनश्चेति' 'आत्मा वा इदमेक एवाग्र आसीत्' (ऐ. आ. 2.4.1) इत्यदयो ब्रह्मकाण्डगता अज्ञातज्ञापका विधय इति (ऋ.भा.उप.सा.भा.पृ.25)। अर्थात् उपनिषदो ब्रह्मकाण्डशब्दाल्लक्ष्यन्ते, ब्रह्मतत्त्वप्रतिपादनात्, तस्मात् सुनिश्चितोऽयमर्थः 'अज्ञातज्ञपकरूपविधिस्वरूपब्राह्मणत्ववत्य उपनिषद' इति। इत्थञ्च ब्रह्मतत्त्वप्रतिपादकत्वे सति ब्राह्मणत्व-व्याप्योपनिषत्त्वमिति लक्षणञ्च साधु सङ्गच्छते।

ब्रह्मप्रतिपादकत्वे सति वेदत्वव्याप्यब्राह्मणत्वं वा लक्षणम्। ऋग्यजुस्सामवेदानां लक्षणं सुसम्पन्नमिति ध्येयम्। अत्र चिन्तोदेति-अथर्ववेदस्य लक्षणं किम् ? तदधिकृत्य मीमांसादर्शनकारो जैमिनिः किमपि नावदत्, किं तत्र वेदत्वं नास्ति वा? सत्यं, तत्रापि ऋग्वेदमन्त्राः सन्ति, ब्राह्मणानि सन्ति, गोपथब्राह्मणमित्यथर्ववेदीयं प्रसिद्धमस्ति, उपनिषदः अपि विद्यन्ते। अतो वेदसामान्यलक्षणं मन्त्रब्राह्मणात्मकत्वं तत्राधिरोहति। अलौकिकं पुरुषार्थोपायं वेत्ति अनेन इति वेदशब्दनिर्वचनं तु तत्र घटते। निःश्वसितन्यायेन ऋगादिवत् अथर्ववेदस्यापि अप्रयत्नोत्पत्तिकत्वं च बृहदारण्यके श्रृण्मः। अपराविद्यायाञ्चाथर्ववेदस्य नाम विज्ञायते। प्रायशः सायणाचार्यप्रभृतीनां व्याख्यानञ्च परामृश्यते। अन्यवेदवत् पैप्पलशौनकजैमिन्यादितदीयशाखा अपि कर्णपुटं प्रविशन्ति, तथापि मीमांसासूत्रलक्षणमन्यवेदस्य यथा तथा नास्येति चिन्तापरिहारस्तु- षोडशर्त्विक्संघसाध्यश्रुत्युक्तत्रेताग्निकयागेषु अत्युपयुक्तर्गादित्रयाणामेव वेदानां लक्षणं बोधयति जैमिनिमहर्षिः। यागानुपयुक्तोऽथर्ववेद इत्याशयः सर्वथा तस्य मुनेर्नास्तीति वक्तुं प्रभवामः। तत्राध्वर्युहोतोद्गातार इति सुप्रधाना ऋत्विजः भवन्ति यागेषु। यज्ञनेता यजुर्वेदविदध्वर्युर्भवति, ऋग्वेदविद्धोता, सामवेदविदुद्गाता इति साधारणनियमः। चतुर्थः कश्चन ऋत्विक्

भवति अथर्ववेदवित् स एव ब्रह्मा इति याज्ञिकसम्प्रदायः। अत्र सायणस्तु-प्रतिज्ञावाक्यं सायणस्य श्रूयते-

**'व्याख्याय वेदत्रितयमामुष्मिकफलप्रदम्।**
**ऐहिकामुष्मिकफलं चतुर्थं व्याचिकीर्षति।।'** इति (अ.वे.भा.सा.पृ.120)

स्वर्गादि-आमुष्मिकफलं ददाति वेदत्रयसाध्ययागः। किन्तु अथर्ववेदीयकर्म ईहामुत्रफलदायकमिति विशेषोऽस्ति। यद्यपि 'त्रयो वेदा अजायन्त.....सामवेद आदित्यात्' इति (ऐ.ब्रा.5.32) 'ऋचः समानि जज्ञिरे' इत्यादिऋगादिमन्त्रप्रमाणात् वेदत्रयमेव सिद्ध्यति, कुतोऽथर्ववेदः, कस्मात् तस्य व्याख्यानमित्यादिपूर्वपक्षमुद्भाव्य सिद्धान्तयति सायणः-ऋग्वेदेन हौत्रमेव प्रतिपाद्यते, यजुषा आध्वर्यवम्, साम्ना औद्गात्रम् अवशिष्टब्रह्मकर्तव्यता-प्रतिपादकचतुर्थो वेदो व्याख्येयः 'तदभावे यज्ञशरीरस्य अनिष्पत्तेः' अपि च गोपथब्रह्मणवचनप्रमाणं 'कं वा होतारं वृणीयाम्......सामविदम् उद्गातारम्, अथर्वाङ्गिरोविदं ब्रह्माणम्। तथाहास्य चतुष्पात् प्रतितिष्ठति (2.24) 'अथ चेन्नैवंविदं ब्राह्मणं वृणुते........यज्ञोरिच्यते'(2.24) 'यथैकपात्पुरूषो यदनुभयचक्रो वा रथो वर्तमानो भ्रेषं न्येति एवमेवास्य यज्ञा भ्रेषं न्येति (गो. ब्रा. 3.1) इत्यादिरीत्या ब्रह्मा भवति अथर्ववेदविदेवेति संस्थापयति। 'येऽङ्गिरसः सरसः, येऽथर्वाणस्तद्भेपजम्। यद्भेषजं तदमृतम् यदमृतं तद्ब्रह्म' इति गोपथब्राह्मणेऽपि चतुर्थवेदस्य महत्स्थानं विद्यते। आमुष्मिकफलेषु दर्शपूर्णमासादिषु अयनान्तेषु त्रयीविहितकर्मसु अपेक्षितत्वं ब्रह्मत्वम्। अनन्यलभ्यत्वात् अथर्ववेदैकसमधिगम्यम्।(सा.भा.अ.वे.पृ.122) अथर्ववेद प्रतिपादितकर्माणि कानीति विवृणोति- 'ऐहिकफलानि शान्तिकपौष्टिकानि कर्माणि, राजकर्माणि-अपरिमितफलानि तुलापुरुषादि-महादानानि च अथर्ववेद एव प्रतिपादितानि। पौरोहित्यञ्चाथर्वविदैव कार्यम्। राजाभिपेकादीनां तत्कर्तृकाणां कर्मणां विस्तरेण तत्र प्रतिपादितत्वात्।' अन्यच्च विष्णुपुराणे 'पौरोहित्यं शान्तिपौष्टिकादि राज्ञां अथर्ववेदेन कारयेत् ब्रह्मत्वं च इति।' 'अभिषिक्ताथर्वमन्त्रैर्महीं भुङ्क्ते ससागरम्।'(मा.पु.) इत्यनेकानि प्रमाणवचनानि तद्वेदीयकर्मणि संसूचितानि सायणैः। (अ.वे.सा.भा.भू.पृ.120:123) अथर्ववेदविदां पौरोहित्यं राजकर्मणि नितरां आवश्यकमिति-

**'त्रय्यां च दण्डनीत्यां च कुशलः स्यात्पुरोहितिः।**
**अथर्वविहितं नित्यं कुर्याच्छान्तिकपौष्टिकम्।।'** (31)इति (का.नी.सा.92)।

तथा कौटलीयार्थशास्त्रे च-'पुरोहितमुदितोदितकुलशीलं साङ्गवेदे दैवे निमित्ते दण्डनीत्यां च अभिविनीतमापदां दैवमानुषीणामाथर्वभिः उपायैः प्रतिकर्तारं प्रकुर्वीत' (1.9.5 पृ. 385)। इथञ्च चतुर्थवेदोक्तानि सर्वाण्यपि कर्माणि वैदिकानि आम्नायविहितत्वात् प्रमाणभूतानि ऋगादिवेदोक्तकर्मवत्, अतो वेदत्वं प्रामाण्यं चेत्युभयमथर्ववेदस्य सङ्गतं सम्मतं साधु चेति अभिमन्यमाना साम्प्रदायिकास्तदध्ययनाध्यापनादिकर्तव्यकर्मसु प्रवर्तन्ते।

संहितापदप्रयोगो वैदिकानां यो वर्तते, तत्र कः संहितात्वं प्राप्नोति? इत्यत्र संहितापदस्यार्थस्तु कोशे 'मन्त्रभागात्मको वेदः संहिता' इति दृश्यते। ऋक्संहिता, यजुःसंहिता इत्यादि ऋक्संहिताहोम इत्यादि च? ब्राह्मणसंहितेति व्यवहारो नास्त्येव। अर्थात् सिद्धं ब्राह्मणभिन्नमन्त्राणामेव संहितात्वं सम्पद्यते। 'संहन्यते एकत्रीक्रियन्ते मन्त्राः, सूक्तानि वा यत्र तत्संहिता' इति व्युत्पत्तिरस्ति। 'परः सन्निकर्षः संहिता' इति पाणिनीयसूत्रानुसारेण 'वर्णानां परस्परमत्यन्तसामीप्यं संहिता' इतिवत् पदानां परस्परमत्यन्तसामीप्यं संहिता, इत्याख्यानात् मन्त्रभागस्य संहितात्वं ख्यापयितुं शक्यते। पदपाठस्तु मन्त्रात्मकवेदस्यैव प्रसिद्धः, 'नमः-ते-रुद्र-मन्यवे-उतो इति-ते-इषवे-नमः' इति पदपाठः। अस्य मूलन्तु 'नमस्ते रुद्र मन्यव उतो इषवे नमः।' अत्र मूले नमः ते इत्यादिपदानां परस्परमत्यन्तसामीप्यमस्ति। तस्मात् पदपाठस्य संहितारूपो नमस्ते रुद्र मन्यव इत्यादिमन्त्रभागः। मन्त्रभागस्य संहितापदाभिधेयत्वं समञ्जसमस्ति। अर्थात् पदक्रमजटादिविकृतीनां मूलभूतोऽयं मन्त्रभागो वेदः संहितापदवाच्य इति ध्येयम्।

ऋगादिभेदेन वेदाश्चत्वारः, पुनश्च ऋगादीनामपि वेदानामवान्तरविभागो विद्यते शाखाशब्दव्यपदेश्यः।

यथा–'एकशतमध्वर्युशाखा:, सहस्त्रवर्त्मासामवेद:, एकविंशतिधा बह्‌वृच्यम् (ऋग्वेद:) नवधाथर्वणे वेद:' इति पस्पशाह्निके महाभाष्यकार: पतञ्जलिमुनिरब्रवीत् मुक्तिकोपनिषद्वचनमपि तत्तच्छाखासंख्यां संख्यापयति। यजुषो वाजसनेय:, तैत्तिरीय इति द्वौ विभागौ भवत:। शुक्लंयजुर्वेद: कृष्णयजुर्वेद इत्यपि नाम तयोविद्यते। काण्वशाखा इति शुक्लयजुर्वेदस्यापर: कश्चन विभागोऽस्ति। चरणव्यूहग्रन्थे च शाखाविशेषाणां परिचयोऽस्ति। चतुर्षु वेदेषु अधुना विद्यमानातिरिक्ता: सर्वा: शाखा: कालकवलिता: सन्ति। शाकलबाष्कलाश्वलायन- शांखायनमाण्डूकायना इति ऋग्वेदीयशाखा: प्रसिद्धा:, तत्रापि मुद्‌गलादिपञ्चशाखा: शाकलीया:, बोध्यादिचतस्र: शाखा: बाष्कलीया:, शांखायनादिचतस्र: शांखायनीया:, ऐतरेयब्राह्मणम्, कौषीतकीब्राह्मणमिति ऋग्वेदीयम्, ऐतरेयारण्यकम्, कौषीतक्यारण्यकमिति ऋगारण्यकद्वयम्। ऋग्वेदीया: दशोपनिषद:-ऐतरेयोपनिषत्, कौषीतक्युपनिषत्, त्रिपुरानिर्वाणमित्यादि।

तैत्तिरीयकठमैत्रायणीवाजसनेयकाण्वा: इति पञ्च यजु:शाखा:। अत्र मतभेदोऽस्ति। पञ्चदशशाखा इत्यपि पक्ष:। संप्रति तैतित्तरीयशाखा, काण्वशाखा, माध्यन्दिनशाखा इति तिस्र उपलभ्यन्ते अध्ययनाध्यापनपरम्परायामधुना जीवन्ति। चारायणीवारायणीमानवकपिष्ठलादिषड्त्रिंशच्छाखा: कालायत्ता:। तैत्तिरीयब्राह्मणम्, तैत्तिरीयारण्यकम्, तैत्तिरीयोपनिषत् (शिक्षा-ब्रह्म-भृगुवल्लय:) इति लभ्यते माध्यन्दिनीयं काण्वीयं शतपथब्राह्मणम् (शताध्यायात्मकम्)। बृहदारण्यकोपनिषत्, ईशावास्योपनिषत्, मुक्तिकादिनवदशोपनिषद: माध्यन्दिनीया:। सामवेदीयसहस्रशाखासु कौथुमराणायनजैमिनीयशाखास्तिस्र इदानीमध्ययनाध्यापनपरम्परायां श्रवणपुटमधिगच्छन्ति। शिष्टा: शाखा: सर्वा अपि कालाग्निना दग्धा इति दौर्भाग्यमस्माकम्। ताण्ड्यषड्विंशमन्त्रदैवतार्षेय-सामविधानसंहितोपनिषद्वंशाख्यानि सामवेदीयब्राह्मणान्यष्टसंख्याकानि भवन्ति। आरण्यकमिति पृथङ्नास्ति। छान्दोग्यकेनजाबालादिषोडशोपनिषद: सामवेदीया:। यद्यपि पैप्पलशौनकादिनवशाखा: अथर्ववेद सन्तीति चरणव्यूहादिग्रन्थेषु पठितुं शक्यते, तथापि पैप्पलादशौनकाभिधेये द्वे शाखेऽधुना वर्तेते। तत्संप्रदायानुरूपाध्ययनाध्यापनपारम्पर्यं सर्वथा लुप्तमिति मन्ये। अधीतऋग्वेदिन: केचनाथर्ववेदपाठिनस्तच्छोभां प्रवर्धन्ते। गोपथब्राह्मणमस्य वेदस्य भवति। माण्डूक्यमुण्डकगणपत्यादि एकत्रिंशदुपनिषदोऽस्येति वैदिकानां मतम्। आरण्यकमिति नास्ति। इत: परं चतुर्षु वेदेषु प्रतिपाद्यविषया: के इति चिन्तयाम:।

**'अध्यायानां चतु:षष्टिर्मण्डलानि दशैव तु।**
**वर्गाणाञ्च सहस्त्रे द्वे संख्यात्वे च षडुत्तरे।।'**

इत्यादि – अनुवाकानुक्रमणिकेतिग्रन्थे ऋग्वेदस्वरूपवर्णनं दृश्यते। अष्टाष्टकात्मक ऋग्वेद:, दशमण्डलानि, अवान्तरविभागो वर्ग: अनुवाक इति। देवादिसूक्तानां तत्र विशेषतया दर्शनं भवति। इन्द्रवरूणाग्निमरुत्सवितृरुद्रोषसादिदेवसूक्तानि, नासदीयादितत्त्वसूक्तनि, कितवाद्युपदेशसूक्तानि, यमयमीत्यादिसंवादसूक्तानि, दानस्तुतिसूक्तानि इत्यादिसूक्तान्येवात्र विलसन्ति।

दशपूर्णमासाश्वमेधाग्निचयनराजसूयवाजपेयसौत्रामणिसोमयागादियज्ञकर्मविधिमन्त्राणां सङ्ग्रहोऽस्ति यजुर्वेदे। सप्तकाण्डात्मकं यजु:। प्रपाठक: (प्रश्न:) अनुवाक इत्येवं प्रकारेणावान्तरविभागो तत्र वर्तते। अध्याय:, कण्डिका, अनुवाक इति वाजसनेयवेदविभाग:।

सामवेदश: छन्दारण्यकमहानाम्नोत्तराश्चेति चत्वार अर्चिका अत्र विद्यन्ते स्तोभगानविषयकग्रन्था:। गेयारण्योहोहयाश्चेति परिशिष्टाश्चत्वारो ग्रन्थाश्च सामवेदीया:। पूर्वार्चिकोत्तरार्चिकभेदेन द्वौभागौ च स्त:। दशमन्त्राणां समूहं प्रति दशतीति पृथक् भागो वर्तते। आग्नेयैन्द्रपवमानारण्यकमहानाम्नीति पर्वाण्यपि श्रूयन्ते। बृहद्रथन्तरवैरूप्यरैवतशाक्करागिष्टोम- सामेत्यादिगानविशेषा भवन्ति। तत्तद्गानविशेषेणोद्गाता यागसमये देवं स्तौति। अत्रापि सप्तस्वरा: विराजन्ते। सामवेदीयविषया अतिनिगूढा: झटिति बुद्धिपथं नाधिरोहन्ति।

अथर्ववेदस्तु विंशतिकाण्डात्मकः ऋग्वेदवत् सूक्तान्येवात्र प्रकाशन्ते। पौष्टिकशान्तिकसूक्तानि, भैषज्यसूक्तानि, आरोग्यसूक्तानि, राजकर्मसूक्तानि, कानिचिदाभिचारिकसूक्तान्यपि एवं सूक्तकुसुमालङ्कृतोऽयमथर्ववेदः।

अन्यच्च ऋग्वेदादितत्तद्वेदीयसंस्कारादिकर्मप्रतिपादकग्रन्थाश्च नाना वर्तन्ते। यथा- आश्वलायनश्रौतसूत्रम्, शांखायनश्रौतसूत्रम् (ग्रन्थः) आश्वलायनगृह्यसूत्रम्, शांखायनगृह्यसूत्रम् ऋग्वेदीयप्रातिशाख्यमिति व्याकरणग्रन्थः, बृहद्देवता, आर्षानुक्रमणी, छन्दोऽनुक्रमणी, अनुवाकानुक्रमणी- त्यादिऋग्वेदीयग्रन्थाः। श्रौतगृह्यग्रन्थाः सूत्रात्मकाः, एषामपि भाष्यादिकं विद्यते। कात्यायनश्रौतसूत्रम्, पारस्करगृह्यसूत्रम्, शुक्लयजुः प्रातिशाख्यमिति माध्यन्दनीयाः एते ग्रन्थाः।

आपस्तम्बमानवहिरण्यकेशीबौधायनभारद्वाजसत्याषाढवैखानसश्रौतसूत्रग्रन्थाः, आपस्तम्बबौधायनादितत्तन्नाम्ना गृह्यसूत्रग्रन्थाः बौधायनापस्तम्बधर्मसूत्रग्रन्थाः, आपस्तम्बबौधायनशुल्बसूत्रग्रन्थाः, तैत्तिरीयप्रतिशाख्यग्रन्थश्च तैत्तिरीयाः (कृष्णयजुर्वेदीयाः) द्राह्यायणन्ताट्यायनमशकश्रौतसूत्रम्, गोभिलखदिरजैमिनीयगृह्यसूत्रम्, पुष्पकृतसामप्रातिशाख्यम्, अपि च केचन परिशिष्टग्रन्थाश्च सामवेदस्य प्रथिताः भवन्ति।

कौशिकश्रौतसूत्रम्, वैखानसवाराहगृह्यसूत्रम्, अथर्ववेदीयप्रातिशाख्यमिति व्याकरणग्रन्थस्याथर्ववेदस्य सुप्रसिद्धग्रन्थाः वर्तन्ते। इदमत्र वर्णनं चतुर्णामपि वेदानां सूक्ष्मशरीरस्येति ध्येयम्।

वेदार्थज्ञानोपकारकं वेदाङ्गशिक्षादिषण्णामध्ययनं कर्तव्यताकमिति 'षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति' विधीयते। वेदशरीरस्याङ्गभूतानि शिक्षादीनि-

**छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।**
**ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते॥**

**शिक्षा घ्राणन्तु वेदस्य मुखं व्याकरणं स्मृतम्।**
**तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते॥''** (पा. शि. 41-42) हस्तपादादिरूपत्वेन षडङ्गानां कल्पना भवति। न केवलं शिक्षादीनि वेदार्थज्ञानसहकारीणि, किन्तु पुराणादीन्यपि याज्ञवल्क्यमुनिर्बोधयति-

**पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः।**
**वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दशः॥'** इति (या. स्मृ. 1.3.4)

**छन्दः**-तत्र तत्र वेदे छन्दोविशेषाणां विहितत्वात् 'तस्मात् सप्त चतुरुत्तराणि छन्दांसि प्रातरनुवाकेऽनूच्यन्ते' इत्यादि (तै. ब्रा. 1.5.12.1)। गायत्र्युष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुब्जगतीत्येतानि सप्त छंन्दांसि। चतुर्विंशत्यक्षरा गायत्री, अष्टाविंशत्यक्षरा उष्णिक् इत्याद्यक्षरसंख्यापि विद्यते। तत्र मगणयगणादिसाध्यो गायत्र्यादिछन्दोविवेकः, अतस्तद्ग्रन्थाध्ययनं विना विवेकोऽनुपपन्न इति अध्येतव्यच्छन्दोग्रन्थः।

**हस्तकल्पः कल्पः**- कर्मप्रयोगविधिबोधको ग्रन्थः कल्पः। बौधायनापस्तम्बादिश्रौतगृह्यधर्मशुल्बसूत्रात्मकः। कल्प्यते समर्थ्यते यागादिप्रयोगोऽत्रेति कल्पपदव्युत्पत्तिः। वेदोक्तकर्मणां प्रयोगज्ञानार्थं कल्पग्रन्थाध्ययनं नितरामुपकारकम्।

**नेत्रकल्पं ज्योतिषम्**- यज्ञकालार्थसिद्धये ज्योतिषं वेदाङ्गम्। 'संवत्सरमेतद्व्रतं चरेत्', 'वसन्ते ब्राह्मणोऽग्निमादधीत', 'मासि मासिअतिग्राह्या गृह्यन्ते', 'प्रातर्जुहोति', कृत्तिकास्वग्निमादधीत' इत्यादिरीत्या संवत्सरमासायनर्तुनक्षत्रादीनां ज्ञानं ज्योतिःशास्त्राधीनम्। अतः कालविशेषपरिज्ञानार्थमध्येतव्यं ज्योतिषमिति वेदाङ्गत्वं तस्य प्राप्तम्।

**श्रोत्रस्थानं निरुक्तम्**- वेदार्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तम्। गौः ग्मा-ज्मा-क्ष्मा-क्षा-क्षमेत्यारभ्य देवपत्न्य इत्यन्तो यः पदानां समाम्नायः समाम्नातस्तस्मिन्ग्रन्थे पदार्थावबोधाय परापेक्षा न विद्यते (सा.भा.भू.55)। यास्काचार्यप्रणीतोऽयं ग्रन्थस्तु त्रिकाण्डात्मकः (नैघण्टुककाण्डम्-नैगमकाण्डम्-दैवतकाण्डमिति) सुतरामस्य गन्थस्याध्ययनमपेक्षितं भवति।

शिक्षा-'शीक्षां व्याख्यास्यामः, वर्णः स्वरः, मात्रा बलं, सामः सन्तानः' इत्यादितैत्तिरीयोपनिषच्छिक्षावल्ली (2-141)। 'वर्णस्वराद्युच्चारणप्रकारो यत्र उपदिश्यते सा शिक्षा' इति (सा.भा.भू.49)। अकारादिवर्णाः, उदात्तादिस्वराः, ह्रस्वादिमात्राः, स्थानप्रयत्नौ इत्यादीनां परिज्ञाने सत्येव वेदोच्चारणम्। अध्ययनाध्यापनकार्यं सम्भवेत् तद्विज्ञानं विनाध्ययने हानिर्भवेत्। शिक्ष्यमाणवर्णातिवैकल्ये बाधो दर्शितः-

**'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।**
**स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्।।** इति

(पा.शि.52.पृ.3)।

**'तस्मात् स्वरवर्णाद्यपराधपरिहाराय शिक्षाग्रन्थोऽपेक्षितः'** (सा.भा.भू.50)।

**मुखं व्याकरणम्** - पाणिनीयव्याकरणं सर्वथा नानपेक्षितम्। वेदव्याकरणं प्रतिवेदं प्रातिशाखाख्यं चाध्येतव्यमेव। प्रकृतिप्रत्ययाद्युपदेशेन पदस्वरूपतदर्थनिश्चयायोपयुज्यते। वररूचिना मुनिना व्याकरणप्रयोजनं वार्तिके यत्प्रदर्शितं अत्र तदेव प्रयोजनम् 'रक्षोहागमलघ्वसन्देहाः प्रयोजनम्।' महाभाष्ये पतञ्जलिना स्पष्टमुक्तं - 'रक्षार्थं वेदानामध्येयं व्याकरणम्'। लोपागमवर्णविकारज्ञो हि सम्यक् वेदान् परिपालयिष्यति वेदार्थञ्चाध्यवस्यति। ऊहः-न सर्वैर्लिङ्गैर्न च सर्वाभिर्विभक्तिभिर्वेदे मन्त्राः निगदिताः। ते चावश्यं यज्ञाङ्गत्वेन यथायथं विपरिणमयितव्याः तद् व्याकरणज्ञानेनैव साध्याः। **आगमः**- ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति। लघ्वर्थं चाध्येयं व्याकरणम्। मन्त्रेषु स्वरसन्देहो भवेत्, समासाधीनोदात्तत्वस्वरत्वादीनां सन्देहे सति अनभिज्ञस्य निर्णयो नास्ति, सन्देहपरिहारस्तु व्याकरणादेव संभवः, असन्देहार्थञ्च व्याकरणमध्येतव्यम्। भाषाशुद्धिः, उच्चारणशुद्धिश्च व्याकरणादेव सम्पादनीयेति भृशं व्याकरणस्य वेदाङ्गत्वं वेदविग्रहस्य मुखत्वेन पाणिनिना प्रतिपादितमिति। इति षडङ्गभूतशिक्षादीनां स्वल्प परिचयः कृतः।

शिक्षाग्रन्थस्तु प्रतिवेदं भिन्नोऽस्ति। शौनकशिक्षा, व्यासशिक्षा, नारदीयशिक्षा, कात्यायनशिक्षा, याज्ञवल्क्यशिक्षा, पाराशरीशिक्षा, लोमशीशिक्षा इत्याद्युपशिक्षाणां सङ्ग्रहग्रन्थोऽस्ति।

यथावन्मूलस्य संरक्षणोपायभूतो विकृतिपाठसम्प्रदायो वैदिकसमाजेऽधुना दृश्यते-पदपाठः, क्रमपाठः, जटापाठ इत्यादिपदक्रमपाठमन्तराष्टविकृतिपाठाः सन्तीति वेदसंप्रदायज्ञाः वदन्ति। पौरुषेया एते पाठाः, कर्तृस्मरणमस्ति। चरणव्यूहादिग्रन्थाः स्मारकास्तत्र। अष्टपाठा एवं भवन्ति-

**जटा-माला-शिखा-रेखा-ध्वजो-दण्डो-रथो-घनः।**
**अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा मनीषिभिः।।'** इति। पदपाठस्य प्रकृतिर्मूलवेदः, क्रमविकृतिपाठस्य पदपाठो मूलः। अन्ये जटादयो ये पाठास्तेषां प्रकृतिस्तु क्रमपाठः। पाठविशेषाणां कर्तारः-

**'भगवान् संहितां प्राह पदपाठं तु रावणः।**
**बाभ्रव्यर्षिः क्रमं प्राह जटां व्याडिरवोचत्।।**
**मालापाठं तु वसिष्ठश्च शिखापाठं भृगुर्व्यधात्।**
**अष्टावक्रोऽकरोद्रेखां विश्वामित्रोऽपठद्ध्वजम्।।**
**दण्डं पराशरोऽवोचत् कश्यपो रथमब्रवीत्।**
**घनमत्रिमुनिः प्राह विकृतीनामयं क्रमः।।'** (मधुशिक्षा)

चरणव्यूहग्रन्थे क्रमेण जटादिपाठानां लक्षणमपि वर्तते। जटादिषु पदानामनुलोमविलोम- क्रममनुसृत्य पञ्चसन्धिनियममनतिक्रम्य वेदपदानामुच्चारणं भवति। पञ्चसन्धि:-

**'अनुक्रमश्चोत्क्रमश्च व्युत्क्रमोऽभिक्रमस्तथा।**
**संक्रमश्चेति पञ्चैते जटायां कथिताः क्रमाः॥'**

इति पदपाठिनः, क्रमपाठिनः, जटापाठिनः, घनपाठिनश्च ऋग्यजुर्वेदविदः चेन्न-कर्णाटकान्ध्रमहाराष्ट्रवाराणसीप्रदेशेषु इदानीमपि राराजन्त इति तथ्यम्।

वेदानामप्युपवेदोऽस्तीति ज्ञायते -'आयुर्वेदो धनुर्वेदो गान्धर्ववेदोऽर्थशास्त्रञ्चेति चत्वारः उपवेदाः' इति (प्र.भे.ग्र.176)।

इत्थञ्चैतावता वेदवेदाङ्गवेदीयशाखातदवान्तरीयशाखाविषयविकृतिपाठोपवेदाः प्रायशोऽत्रेपत्रप्रकाशिताः। वेदवाङ्मयं तु आकाशवदतिविशालमस्ति। साक्षाद्विष्णोः विश्वरूपमेव तद्वेदवाङ्मयम्।

**'असितगिरिसमं स्यात्कज्जलं सिन्धुपात्रे**
**सुरतरुवरशाखालेखनीपत्रमुर्वी।**
**लिखति यदि गृहीत्वा शारदा सर्वकालं**
**तदपि तव गुणानामीश पारं न याति॥'** (शि.म.स्तो.32, पृ. 103)

इति श्लोकं स्मृत्वा भगवत्याः शारदायास्तथा चेत् ज्ञानविहीनस्य तृणकल्पस्य लेखकस्य कुतस्तथा सामर्थ्यम् ? तथापि मोदः। विष्णुसहस्त्रनामावल्यां 'वेदा वेदविदव्यङ्गो वेदाङ्गो वेदवित्कविः' (वि.स.शा.भा.27, पृ.104) इति विष्णोर्नाम भवति वेद इति। तत्र शाङ्करभाष्ये तु 'वेदरूपत्वात् वेदः, वेदयतीति वा वेदः।' 'वेदविदेव चाहम्' इति गीता (15.15)। वेदा अङ्गभूता यस्य स वेदाङ्गः, वेदान् विन्ते विचारयतीति वेदवित्' इति व्याख्यानं पश्यामः। अर्थात् साक्षान्नारायण एव वेद इति स्पष्टम्। तस्य जगन्नियामकस्य श्रीमन्नारायणस्य स्तुत्यात्मकमिदं वेदवाङ्मयलेखनं भवतीति भगवता खलूक्तं 'यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्। यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्॥ (गी.9.27) इति तन्मनसि निधाय लेखनेनानेन सुप्रीयतां स एव वेदनारायण इति।

**वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः।**
**तावन्ति हरिनामानि कीर्तितानि न संशयः॥** इति

**डा. सच्चिदानन्द तिवारी**
***उप-निदेशक, मुक्तस्वाध्यायपीठम्,***
***राष्ट्रिय संस्कृत संस्थान, नई दिल्ली***



# The nomenclature and order of weekdays

*Sarva Narayan Jha*

*The word graha is used in a different sense in the Indian astronomy than the corresponding word planet is using in the modern astronomy. In this paper, I am going to use the word planet as a translation of the word graha. In ancient india the grahas were considered to be seven in number i.e. The Sun, Moon, Mars, Mercury, Jupiter, Venus and Saturn. Presuming that the planets move around the earth, they were considered to be geocentric. In 1543, a heliocentric system had been introduced by Nicolaus Copernicus, Presuming that the Planets move around the sun. The method of finding the names as well as order of the weekdays, i.e. Sunday, Monday, Tuesday, Wednesday, Thursday, Friday and Saturday is based on the geocentric system. If we apply the helicentric system for this purpose then the order of the weekdays comes out to be Sunday, Tuesday, Wednesday, Thursday, Friday, Saturday and Monday. Therefore, we can say that the nomenclature and order of weekdays is based on the order of the grahas in the sky as viewed by the Indian Ṛṣis.*

The whole process of the universe continues from time immemorial . The repetition of the process of creation , change , and destruction of the universe is witnessed only by the Time . Time can be identified as an indivisible unity without a beginning or an end .The Time is a great creator and destroyer of all things of the universe, as such he is identi -fied with death , with yama , with the ruler of the dead etc . The cycle of birth and death is an eternal process without any visible force ope-rating the whole system . Therefore , the casualty of creation as well as destruction is attributed to the Kāla , i.e. the Time which is unfa- thomable. The apparent sequence of events gives us the feeling of pre and post , old and new as well as past, present and future . Actually , the Time is indivisible and immeasurable but it has been divided and measured for practical purposes by our Ṛṣis to mark the events.

In the *Sūryasiddhānta* the Time has been conceived as of two types , One is the destroyer of the Universe and the other is that which can be used as the unit of measurement:

***Lokānāmantakṛtakālaḥ kālo'nyaḥ kalanatmakaḥ*[1]**

*Of these, the latter which is used as the unit of measurement has been* divided into two parts : *mūrta* ( gross or real or embodied ) and *amūrta* (subtle or unreal or not embodied )

***Mūrta*** – The *mūrtakāla* is the amount of period , the passing of which can be realised and can be taken cognizance of , having a form.

*Amūrta* - The *amūrta kāla* is the small amount of period , the passing of which cannot be realised or ascertained by calculation or any other means which is formless:

***Sa dviddhā sthūla sūksmattvanmūrtascāmūrta uccyate.***[2]

According to the *Sūryasiddhānta* , the smallest unit of time is known as *prāṇa* (*prāṇādiḥ kathito mūrtastruṭyādyo' mūrtasanjyakaḥ*[3]). The length of the breathe of a normal man is called *prāṇa* . The *Sūryasiddhānta* has not given the details of *amūrta kāla* other than the fact that the *amūrta kāla* begins from . *The* author of *Sūryasiddhānta* did not consider the divisions of *amūrta kāla* as it has no practical value in measuring the motions of the stars and the planets . He has applied visible time in the *Sūryasiddhānta* . He has actually not used the time unit beyond the *prāṇa* in the *Sūryasiddhānta* .

As stated above the time beginning with *prāṇa* is called *mūrta kāla* ( *prāṇādiḥ kathitomūrtaḥ*[4]) . Here *prāṇa* means respirsation time, occupied in pronouncing ten long - syllables . Six respirations ( *prāṇas* ) make a *vināḍī* or *pala* (*śaḍbhiḥ prāṇairvināḍī syāt* [5]) whereas sixty *vināḍīs* make a *nāksatrāhorātra* ( *tatṣaṣṭhyā nāḍikā smṛtā*[6]) , i.e. sidereal day and night . We can understand the reckoning method of sidereal time which is usually adopted in the astronomical text books , on the basis of the following divisions :

10 long syllables ( *Daśadīrghāksaroccāraṇakāla* ) = 1 *prāṇa* or respiration = 4 seconds.

6 *prāṇas* = 1 *vināḍī* = 24 seconds

60 *vināḍīs* = 1 *nāḍī* = 24 minutes

60 *nāḍīs* = 1 sidereal day and night .

The usual modern name of vināḍī is *pala* and that of *nāḍī* is *daṇḍa* or *ghaṭikā* . The *manu's* division of the day is slightly different from the astronomical division , e.g.

15 *nimeṣas* = 1 *kāṣṭhā*

30 *kāṣṭhās* = 1 *kalā* = 1 minute

30 minutes = 1 *muhūrta*

30 *muhūrtas* = 1 day (Manusmṛti 1.64)

The sidereal day is the time of the earth's revolution on its axis. The civil day is the natural day. It is counted from sunrise to sunrise (*Inodayadvayāntaram tadarkasāvanam dinam , sāvano `rkodayaistathā*[7]) and accordingly it has variable length . It is the most important element in all computations of time. Thirty civil days constitute a month ( *tattrimśatā bhavenmāsaḥ*[8]) and 12 civil months constitute a civil year (*māsairdwādaśabhirvarṣam*[9] ). The system of constituting various types of calendar is to divide it into days, months and year of their respective length .Thirty days consti-tute a month and 12 months constitute a year.The basis of such a divi-sion would have been the Sun's complete revolution along with the zodiac consisting of 360 degrees. The course of the Sun was measured along the Zodiac which was divided in to 12 equal parts of 30 degrees each , giving rise to the concept of 360 days and 12 months in a year, the length of the month being 30 days corresponding to the arc of 30 degrees . The concept of

the days , months and year would not have been developed only by the yearly movement of the Sun , because , in that case the daily moement of the sun alongwith the ecliptic could not have been observed .The sunrise and sunset regularly bringing light and darkness , would have been the phenomena most regularly marked with the light being called day and the darkness being call-ed the night *(dinam dineśasya yato'tra darśane tamī tamo hanti adarśane sati*[10]*)* .Thus , the interval for which the Sun shone in the sky came to be known as day and the interval for which it remained invisible, came to be known as night. The interval between one rising to another, came to be known as *ahorātra* (day and night ) and was also called a day itself for astronomical purposes.

The concept of the year would have been developed by the rising point of theSun in the eastern horizon , as it could not have been possible toknow from the Moon , due to lack of any observable annual pheno-mena of the Moon . The early observers would have seen the deflecti- on of the Sun from its rising point either northward or southward and coming back again to its original position . In the first instance, they must have observed the extreme positions in the north or south beyond which the Sun does not move further but moves backward from that point. The interval during which the Sun comes again to either of the extreme position , was called as a year. Therefore in the early period of Indian history , the year began from the solstice particula-rly the summer solstice , the time, around which the monsoons came . Therefore, the year is called *varṣa* or *abda* . Since the division of the year was made on the basis of of the observations of the lunar and solar motions , the lunisolar calendar came into existence (meṣādisthe savitari yo yo māsaḥ prapūryate cāndraḥ caitrādi sa vijneyaḥ) . It is still in use in India . According to the *Sūryasiddhānta* the method of finding the lords of the day , month and year can be summarised as under : The lord of the given day is obtained by dividing the computed civil days by seven and counting the remainder from Sunday in the order of week- days.In this context , it should be known to us that the Sunday is the 1st day of the Kalpa or of the Indian Astro-nomical reckoning System.

The Bhaskar 2 nd described , ***Laṅkānagaryāmudayācca bhānoḥ tasyaiva vā re prathamam vabhūva madhoḥ sitadeḥ dina māsavarṣa yugādikānām yugapat pravṛttiḥ*** [11]. The lord of the month in which the given day occurs is ascertained by dividing the civil days by 30 and multiplying the quotient by 2 and adding 1 and further dividing the total by 7 . The remainder , counted from Sunday in the order of the week days, is the lord of the month. *Māsābda dina saṅkhyāptam dwitrigh nam rūpasayūtam saptoddhṛtāvaśeṣau tū vijñyeyou māsavarśapou* .[12]

Similarly, the lord of the year is ascertained by dividing the computed days by 360 and multiplying the quotient by 3 and adding 1 to the product and then dividing the total by 7 . The remainder , counted from Sunday in the order of the week days, is the lord of the year. Thus , only the quotient of the months and years is retained and the remainder is dropped . Let us now explain the base of these formulas: The names and order of the week days are based on the order of the Graha's in the sky as viewed by the Indian *Ṛṣis* .

The word Graha was used in different sense in the Indian Astronomy

than the corresponding word planet is being used in the modern Astronomy. Since , I am dealing with the Indian Astronomical system, I am using the *word* planet as a translation of the word ***Graha*** , treating the Sun and the Moon as planets . In ancient India , the ***Grahas*** were considered to be seven i.e. the Sun, Moon, Mars, Mercury, Jupiter,Venus and Saturn. Presuming that the planets move around the earth , they were considered to be Geocentric . In 1543 , a heliocentric system had been introduced by the great astronomer Nicolaus copernicus, presuming that the planets move around the Sun . Therefore , the sun and the moon were excluded from the list of the planets and the Earth was included.

According to the Suryasiddhanta, the planets are stated to be revolving in Brahmand below the orbit of the *naksatras*(Asterisms).*Mandāmarejya bhūputra sūrya śukrendujendavaḥ paribhramantyadhodhaḥsthāḥ siddhāḥ vidyādharāghanāḥ*[13] . Their orbits lie in the following descending order: the Saturn, Jupiter, Mars, Sun, Venus, Mercury and moon while in the modern astronomy , the planets lie in the following successive order of distance from the Sun , Mercury , Venus , Earth , Mars , Jupiter and Saturn. The Moon as a satellite moves around the earth as well as around the sun alongwith the earth. The difference between the geocen -tric and the heliocentric system is shown in the following **diagrams:**

## DIAGRAMS




*Geocentric View (Indian Astronomy)*

*Heliocentric View (Modern Astronomy)*

A comparison of the ancient Indian view with the modern one shows that the order of the Mars , Jupiter and Saturn is the same. The Moon's position also agrees with the view of the modern astronomy. Both are considering it to be nearest to the earth . The relative order of the Sun and the Earth also agrees . The position of the Venus and Mercury, however, differs . According to the Ancient Indian astronomy,

the Mercury is the nearest planet to the Earth, while according to the modern Astronomy, the Venus is the nearest planet to the Earth. Henc, the method of finding the names as well as order of the week-days i.e. Sunday ,Monday ,Tuesday ,Wednesday ,Thursday ,Friday and Saturday is based on the geocentric system of Suryasiddhanta ( ***Mandāmarejya bhūputra sūrya śukrendujendavaḥ paribhramantyadhodhaḥsthāḥ siddhāḥ vidyā dharā ghanāḥ***[14] and , ***mandādadhaḥ kramena syuścaturthāḥ divasādhipāḥ varṣādhipatayastadvat tṛtiyāḥ parikīrtitāḥ ,ūrddhvakrameṇa śaśino māsānāmadhipāḥ smṛtāḥ . horeśāḥ sūryatanayādadhodhaḥ kramaśastathā***[15] etc.). If we apply the heliocentric system then the order of the week-days comes out to be Sunday, Tuesday, Wednesday ,Thursday ,Friday , Sat- urday and Monday. The period of the day and night ahorartra is divided into 24 parts known as *horās* . Each *horā* is governed by the graha in succession . In the beginning of the creation the 1st *horā* belon-ged to the Sun , the 2nd *horā* in succession belonged to the Venus, the third to the Mercury , fourth to the Moon , fifth to the Saturn, sixth to the Jupiter and the seventh to the Mars .The cycle was repeated again and again.

Thus the 24th *horā* , the *horā* before the next sunrise, belonged to the Mercury . This can easily be known , dividing 24 by 7 the remainder is 3 , counting from the Sun in the order of the planets the third number comes to Mercury .Thus, at the beginning of the next sunrise , the next *horā* would belong to the Moon , the next graha in order. The day is designated after the *graha* occupying the 1st *horā* at the sunrise .It is known as the lord of the day . Thus , the 1st day of creation belon-ged to the Sun , the 2nd to the Moon, the 3rd to the Mars and so on. The process since then is continuing incessantly.The order of the week days is thus set and the cycle is repeated after a period of 7 days. If we calculate the names and the order of week days on the basis of the heliocentric view, then the order of the week-days comes out to be Sunday, Tuesday, Wednesday ,Thursday ,Friday , Saturday and Monday. hence , on the basis of these facts ,we can say that the ***nomenclature and order of weekdays is based on the order of the grahas in the sky as viewed by the Indian Ṛṣis.***

**References :**


1. Sūryasiddhānta , ch. 1 śloka . 10
2. Sūryasiddhānta , ch. 1 śloka . 10
3. Sūryasiddhānta , ch. 1 śloka 11
4. Sūryasiddhānta , ch. 1 śloka 11
5. Sūryasiddhānta , ch. 1 śloka 11
6. Sūryasiddhānta , ch. 1 śloka 11
7. Sūryasiddhānta , ch. 1 śloka 12
8. Sūryasiddhānta , ch. 1 śloka 13
9. Sūryasiddhānta , ch. 1 śloka 13
10. Sūryasiddhānta , ch. 1 śloka 13

चोराद् भयमिति विग्रहवाक्यं जन्यत्वं पञ्चम्यर्थः। 'राजपुरुषः' इत्यत्र राज्ञः पुरुष इति विग्रहवाक्यं स्वत्वं षष्ठ्यर्थः। 'कर्मकुशलः' इत्यत्र कर्मणि कुशल इति विग्रहवाक्यं तत्र सप्तम्यर्थो विषयत्वम्, स च विशेषज्ञानाश्रयरूपविवेचकपदार्थैकदेशे विशेषज्ञानेऽन्वेति। न तत्पुरुष इति विशेषः। अब्राह्मण इत्यत्र न ब्राह्मण इति विग्रहवाक्यं तत्र नञर्थे भेदे ब्राह्मणस्य प्रतियोगितासम्बन्धेनान्वयः। ब्राह्मणप्रतियोगिको भेद इति वाक्यार्थः। समासे तु नञो भेदवान् लाक्षणिकोऽर्थः। तदैकदेशे भेदे ब्राह्मणस्यान्वयः। वाक्यार्थस्तु ब्राह्मणभिन्न इति।

इति तत्पुरुषः।

कर्माणि दधति ते कर्मधाः ते च तेऽरयेश्चेत्येवंजातीयकः समासः कर्मधारयः इति स्वरूपलक्षणन्तु व्यावर्तकन्तु अभेदविषयतानिरूपितविशेष्यताशालिबोधजनकत्वं संक्षेपत इत्युक्तमेव। तेन न विग्रहवाक्येऽतिव्याप्तिः। 'कृष्णसर्पः' इत्यत्र कृष्णः सर्प इति विग्रहवाक्यं तत्र जगदीशमते कृष्णपदोत्तरप्रथमाविभक्त्यर्थः। तादात्म्यं तत्र प्रकृत्यर्थस्य कृष्णपदार्थस्य कृष्णगुणविशिष्टस्य वृत्तित्वरूपतादात्म्यवान् सर्प इति वाक्यार्थः। 'कृष्णसर्पः' इति समासे तु विनैव लक्षणां तादात्म्यसम्बन्धेन कृष्णपदार्थस्य सर्पेऽन्वयः। कृष्णाभिन्नः सर्प इति वाक्यार्थः। भवानन्दमते कर्मधारयस्थले विग्रहसमासवाक्याभ्यां समानाकार एव वाक्यार्थः। विशेषणविभक्तेः पदसाधुत्वार्थकत्वात्। गदाधरस्तु तत्रापि न नो विद्वेष इत्युक्त्वा जगदीशमतमेवाङ्गीचकार। परन्तु कस्यापि कर्मधारयस्थले लक्षणा नास्तीति सिद्धम्। अत एव निषादस्थपत्यधिकरणे वेदानधिकरणो निषादस्य विध्यन्यथानुपपत्त्या यागाधिकार इति मीमांसकाः। तथा हि निषादस्थपतिं याजयेदिति विधिवाक्यं किं निषादानां यः स्थपतिः तस्याधिकारं वक्ति आहोस्वित् निषादश्चासौ यः स्थपतिस्तस्येति संशये पूर्वोक्तस्यैव निषादस्य वेदानधिकारित्वादिति पूर्वपक्षे उत्तरस्यैवेति सिद्धान्तः, कर्मधारये लक्षणाभावादित्युक्तम्। परन्त्वयं नियमो विशेषणपूर्वपदकर्मधारयस्थल एव, विशेष्यपूर्वपदकर्मधारयस्थले तु भवत्येव लक्षणा।

'वैयाकरणखसूचिः' इत्यादौ खसूचिपदं खसूच्यभिन्नवैयाकरणपरम्, अन्यथा खसूचिपदोत्तरविभक्त्यर्थ-सङ्ख्यान्वयप्रसङ्गात् प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति व्युत्पत्तेः।

एवं 'शीतोष्णम्' इत्यत्र उष्णपदं मन्दोष्णपरं शीतपदं तात्पर्यग्राहकं शीतपदस्यैव वा मन्दे लक्षणा। 'मेघश्यामः' इत्यत्र मेघ इव श्याम इति विग्रहवाक्यं तत्र मेघस्य निरूपितत्वसम्बन्धेन श्यामत्वेन्वयः। एवं च मेघनिरूपितसादृश्यप्रयोजकश्यामत्ववानिति विग्रहवाक्यार्थः। समासे तु मेघपदस्य मेघसदृशोऽर्थः तस्याभेदेन श्यामेऽन्वयः। इत्थं च मेघसदृशाभिन्नः श्याम इति वाक्यार्थः। प्रयोज्यप्रयोजकभावस्तु विशिष्टवैशिष्ट्यमर्यादया लभ्यते। यथा धनवान् सुखीत्यत्र धनविशिष्टे सुखवैशिष्ट्यबोधमर्यादया धनप्रयोज्यसुखवानिति बोधो जायते। तथा श्यामत्वविशिष्टे मेघसदृशस्याभेदे भासमाने सादृश्यस्य वैशिष्ट्यं नियमतो भासत इति श्यामत्वप्रयोज्यमेघसादृश्यवान् मेघसादृश्यप्रयोजकश्यामत्ववान् इति वाक्यार्थः।

गुण इति बुद्धिः गुणबुद्धिरित्यत्र गुणत्वप्रकारिका गुणविशेष्यिका बुद्धिरिति वाक्यार्थः।

'विद्याधनम्' इत्यत्र विद्यैव धनमिति विग्रहवाक्यम्। तत्र एवकारस्य अन्ययोगव्यवच्छेदार्थः। तदैकदेशेऽन्यत्वे विद्यायाः प्रतियोगितासम्बन्धेनान्वयः। अन्ययोगे व्युत्पत्तिवैचित्र्याद् धनस्य निरूपितत्वसम्बन्धेनान्वयः। अन्ययोगे व्युत्पत्तिवैचित्र्याद् धनस्य निरूपितत्वसम्बन्धेनान्वयः। एवं विद्याया अभेदेन धनेऽन्वयः। एवं च विद्याभिन्नं धनं, न विद्या च धनमिति समूहालम्बनबोधः। विद्याधनमिति समासवाक्याच्च विद्याऽभिन्नं धनं विद्याभिन्नं

नेति विशेषः। एवं यशोधनमित्यादौ बोध्यम्।

बहवो व्रीहयो यस्मिन्नित्येवं जातीयकः समासो बहुव्रीहिः। व्यावर्तकं तु लक्षणम् अन्यपदार्थप्रधानत्वम्। समासघटकपदार्थभिन्नार्थबोधकत्वमित्यपि कश्चित्। विग्रहवाक्ये अन्यपदार्थबोधको यादृशविभक्त्यन्तो यच्छब्दार्थस्तादृशविभक्त्यन्तो बहुव्रीहिरिति गीयते। यथा 'चित्रगुः' इत्यादौ चित्रा गावो यस्येति विग्रहे यस्येति शब्दः षष्ठ्यन्त इति चित्रगुरिति षष्ठी बहुव्रीहिः समासः। एवमन्यत्र बहुव्रीहौ विग्रहवाक्याद् यादृशविशेष्यविशेषण-भावापन्नो बोधः समासवाक्यात् तद्विपरीतः। यथा चित्रा गावो यस्येत्यादौ गोपदार्थे चित्रापदार्थस्याभेदः तत्रैव च यच्छब्दार्थस्य बुद्धिविषयस्य कृष्णादर्विभक्त्यर्थस्वत्वद्वाराऽन्वयः। एवं च यत्स्वत्ववत्यो गावश्चित्राभिन्ना इति अन्यपदार्थसम्बन्धविशेष्यतावच्छेदकगोविशेष्यकाभेदसंसर्गकचित्राप्रकारकः शाब्दबोधः। सति तात्पर्ये चित्राविशेष्यतावच्छेदकगोविशेष्यकान्यपदार्थसम्बन्धप्रकारकोऽपि चित्राभिन्ना गावो यत्स्वत्ववत्य इति शाब्दबोधो भवत्येव।

चित्रगुरिति समासवाक्यात्तु चित्राभिन्नगोस्वामीति। तत्र गोपदस्य गोस्वामिनि लक्षणा। बहुव्रीहावुत्तरपदे लक्षणेति सिद्धान्तात्। अत एवोत्तरपदार्थप्रधानत्वमस्य।

'प्राप्तोदकः' इत्यत्र प्राप्तमुदकं यमिति विग्रहवाक्यम्। तत्र यमिति द्वितीयान्तार्थस्य यत्पदार्थग्रामनिष्ठकर्मत्वस्य निरूपकतासम्बन्धेन प्राप्तपदार्थैकदेशे प्राप्तावन्वयः। प्राप्तपदार्थस्य प्राप्त्याश्रय उदकमिति वाक्यार्थः। प्राप्तोदक इति समासे तु उदकमिति वाक्यार्थः। गत्यादिकर्त्राश्रयस्य यादृशक्रियानिरूपितं यादृशकारकत्वं समासवाक्ये तादृशक्रियानिरूपितं तादृशकारकत्वसम्बन्धेनोत्तरपदस्यान्यपदार्थे लक्षणां कृत्वा तत्र तत्र बोधोऽवसेयः। यथा भुक्तोदन इत्यत्र भुक्तम् ओदनं येनेति विग्रहवाक्यार्थेऽन्यपदार्थस्य भुजिक्रियानिरूपितं कर्तृत्वं प्रतीयते। समासे तु ओदनपदस्य स्ववाच्योऽर्थोदनकर्मभुजिक्रियानिरूपितकर्तृत्वसम्बन्धेन लक्षणां कृत्वा भुक्तोदनविशिष्ट इति वाक्यार्थः। एवं दत्तसूप उद्धृतधनमित्यादितः स्वयमूह्यम्।।

उभयपदार्थप्रधानत्वं द्वन्द्वसमासत्वं यथा रामकृष्णौ इत्यत्र रामस्य कृष्णस्य च विशेष्यत्वमस्तीति रामश्च कृष्णश्चेति विग्रहवाक्यं तस्मादेकत्वविशिष्टो राम एकत्वविशिष्टश्च कृष्ण इति समूहालम्बनबोधो भवतीति केचित्। रामो भिन्नः कृष्णो भिन्न इत्यपरे। यत्क्रियान्वितो रामस्तत्क्रियान्वितः कृष्ण इत्यन्ये। रामसमुच्चितः कृष्णः कृष्णसमुच्चितो राम इति तुराणकः सर्वोऽप्ययं मतभेदश्चात् विस्तरस्तु प्रकारान्तरेण समासनिरूपणे प्रदर्शयिष्यते। समासवाक्यात्तु द्वित्वविशिष्टौ रामकृष्णाविति बोधः।

द्वयोर्गवोः समाहारो द्विगुरित्येवं जातीयकः समासो द्विगुरिति। त्रयाणां शृङ्गाणां त्रिशृङ्गमित्युदाहार्यम्। तत्र विग्रहवाक्ये समाहारो विशेष्यः समाहारः समुदायः। समासे तु शृङ्गपदं शृङ्गसमुदायपरं तत्र त्रिशब्दार्थस्य त्रित्वसङ्ख्याविशिष्टस्याभेदेनान्वयः। अव्ययीभावो नाम विभक्त्याद्यर्थकाव्ययपदघटितत्वम् अस्ति च 'अधिहरि' इत्यादौ। हराविति सप्तम्यर्थबोधकपदघटितत्वम् विग्रहवाक्यं तु हरौ इति।

**सामान्यतः समासार्थाः** शिष्यबुद्धिवैशद्यार्थं विशेषतो निरूप्यन्ते। तत्र तावत् तेषामेव हि पदानां समासो भवति यैश्च समस्यमानैर्विशिष्टबोधो जन्यते, "समर्थः पदविधि" इति सूत्रात्। अत एव 'ईश्वरं गुरुं च भजस्व' इत्यादौ समुच्चये ईश्वरगुर्विति न समासः। भजनक्रियायां तयोर्निरपेक्षत्वात् सामर्थ्याभावात्। नन्वेवं 'धवखदिरौ छिन्धि' इत्यादावपि समासो न स्यात्, तत्रापि छेदनक्रियायां धवखदिरयोर्निरपेक्षत्वादिति चेद् बाढम्। सर्वथैव ईश्वरगुरू भजस्वेति समासो न भवतीति न वदामः, किन्तु यदा क्रियायामीश्वर-

गुर्वोरीश्वरत्वगुरुत्वरूपप्रत्येकधर्मेणान्वयो विवक्षितस्तदा तयोर्निरपेक्षत्वादसमासः। यदा चेश्वरगुरूभयत्वेनान्वयो विवक्षितस्तदा तयोः परस्परं सापेक्षत्वात् समासो भवत्येव। अत एव 'धवखदिरौ' इति सर्वदैव समासो भवतीति न भ्रमितव्यम्, किन्तु द्वित्वेनान्वयविवक्षायामेव। तत्तद्रूपेणान्वयविवक्षायां तु धवं खदिरं च छिन्धीति वाक्यमेव। न चैवं धव पश्य खदिरं छिन्धीत्येतत्तात्पर्येण प्रयुक्तस्य 'धवखदिरौ पश्य छिन्धि' इत्यस्यासाधुतापत्तेः, न हि तत्र कस्यामपि क्रियायां द्वित्वावच्छिन्नान्वयस्य इति वाच्यम्, तत्रापि द्वित्वावच्छिन्ने द्वित्वावच्छिन्नान्वयस्य सुवचत्वात्। न चैवमन्वाचये 'भिक्षामट गां चानय' इत्यत्र समासः स्यात्, तत्रापि द्वित्वावच्छिन्नयोरटनानयनक्रिययोर्द्वित्वावच्छिन्नयोर्भिक्षागवोरन्वयस्याबाधादिति वाच्यम्, गुणप्रधानभावशून्यत्वेन विशेष्यस्य विवक्षिततत्वात्। इत्थं चेतरेतरसमाहारयोरेव चार्थयोर्द्वन्द्वसमासो नान्यत्र, "समर्थः पदविधिः" इति शास्त्रादिति सिद्धम्।

तत्र सामान्यतः **समासश्चतुर्विधः**। अव्ययीभावतत्पुरुषबहुव्रीहिद्वन्द्वभेदात्। तत्पुरुषस्त्रिविधः। समानाधिकरणविशेषणकोऽसमानाधिकरणविशेषणकः सङ्ख्यापूर्वकश्चेति भेदात्। बहुव्रीहिर्द्विविधः। तद्गुणसंविज्ञानातद्गुणसंविज्ञानभेदात्। इतरेतरसमाहारैकशेषभेदाद् द्वन्द्वस्त्रिविधः। केषाञ्चिन्मते कर्मधारयद्विगुतत्पुरुषाव्ययीभावबहुव्रीहिद्वन्द्वोपपदभेदात् सप्तविधः। यथाहुः –

**स चायं षड्विधः कर्मधारयादिप्रभेदतः।**
**यश्चोपपदसञ्ज्ञोन्योस्तेनासौ सप्तधा मतः।।**

इति। प्राचीनास्तु पूर्वमध्यान्त्यसर्वान्यपदप्राधान्यभेदात् प्रकारान्तरेण समासस्य पञ्चविधत्वमिच्छन्ति। वृद्धास्तु पुनरन्यथैव षड्विधत्वं प्राहुः। तथा च ते

**सुपां सुपा तिङा नाम्ना धातुनाथ तिङां तिङा।**
**सुबन्तेनेति च ज्ञेयः समासः षड्विधो बुधैः।।**

इति। सर्वेषामपि प्रोक्तेषु चतुर्विधेष्वेव यथान्तर्भावस्तथा तत्र तत्रोदाहरणे प्रदर्शयिष्यते। "अव्ययं विभक्ति वचनेषु" इदं सूत्रम् अव्ययीभावविधायकं तदर्थश्च विभक्त्याद्यर्थे विद्यमानमव्ययं सुपा समस्यत इति। अस्मिन् सूत्रे अव्ययमिति प्रथमान्तं वर्तते अतस्तस्योपसर्जनसञ्ज्ञा प्रथमानिर्दिष्टं समास उपसर्जनमिति सूत्रात्। उपसर्जनसञ्ज्ञायाः फलं पूर्वनिपातः। यथा अधिहरीत्यत्र अधि शब्दः सप्तमीविभक्त्यर्थेऽधिकरणे वर्ततेऽतस्तेन समासः। अस्य लौकिकविग्रहवाक्यं तु हरावित्येव, न तु हरावधीति अस्वपदाविग्रहत्वात्। अत एव नित्यसमासोऽयम्। अयं भावः यथा 'राजपुरुषः' इत्यादिसमासोऽनित्यः राज्ञः पुरुष इति विग्रहवाक्यस्यापि सम्भवात्। तथा यदि हरौ अधीति 'अधिहरि' इत्यस्य विग्रहवाक्यं स्वीक्रियते तदा नित्यसमासो न स्यादिति। एवं चाव्ययीभावस्य नित्यसमासत्वम्। तत्त्वं तु अस्वपदघटितविग्रहत्वम्। इदं तु बोध्यम् "अव्ययं विभक्ति०" इत्यादिशास्त्रेण विहिताव्ययीभावसमासे सर्वत्रोत्तरपदार्थविशेषितपूर्वपदार्थे उत्तरपदार्थस्य लक्षणा। प्रत्ययानामिति व्युत्पत्यनुरोधादिति। एवं च 'अधिहरि' इत्यस्माद् हर्यधिकरणम् 'उपकृष्णम्' इत्यस्मात् कृष्णसमीपं सुमद्रमित्यस्मान्मद्रसमृद्धिर्दुर्यवनमित्यस्माद् यवनर्ध्यभावो निर्मक्षिकमित्यस्मान्मक्षिकाणामभाव इति बोधः। पूर्वोदाहरणे यवनानामृद्धेरभावः। इह तु समासघटकमक्षिकाणामभाव इति न पूर्वस्योत्तरेण गतार्थता। अत एव सूत्रे अर्थाभाव इत्यत्रार्थपदमपि सार्थकम्। अर्थपदस्य समासघटकार्थपरत्वात् अभावस्यात्यन्ताभावपरत्वाच्च न 'अतिहिमम्' इत्यस्य गतार्थत्वं तस्माद् हिमध्वंस इति बोधः। 'अतिनिद्रम्' इत्यतः संप्रति निद्रा न युज्यत

इति। 'इतिहरि' इत्यस्माद् हरिशब्दप्रकाश इति। 'अनुविष्णु' अस्माद् विष्ण्वनन्तरमिति बोधः। अनुरूपमित्यस्माद् रूपयोग्यमिति बोधः। प्रत्यर्थमस्मादर्थत्वव्यापकमिति नायं नित्यसमासः। अर्थम् अर्थं प्रतीत्यस्य स्वपदविग्रहस्य सत्त्वात्। अन्यथा द्वितीया न स्यात् 'यथाशक्ति' इत्यतः शक्तिमनतिक्रम्येति 'सहरि' इत्यत्र सादृश्यार्थकसहशब्देन समासे 'अव्ययीभावे चाकाले' इति सूत्रेण सहस्य सादेशो बोध्यः। शाब्दबोधस्तु हरिसादृश्यमिति। सर्वोऽप्ययं यथाशब्दस्य प्रपञ्चः। तदुक्तं योग्यतावीप्सापदार्थानतिवृत्ति-सादृश्यानि यथार्था इति। 'अनुज्येष्ठम्' इत्यतो ज्येष्ठानुपूर्व्येणेति। 'सचक्रम्' इत्यतश्च चक्रेण युगपदिति। सख्या सदृशः 'ससखि' इत्यतः सखिसदृश इति बोधः। यद्यपि यथार्थत्वेनैवास्य चारितार्थ्यं तथापि गौणसादृश्येऽपि यथा स्यादित्येवमर्थं सूत्रे सादृश्यस्य पुनरुपादानमिति बोध्यम्। क्षत्राणां सम्पत्तिः 'सक्षत्रम्' इत्यतः क्षत्रसम्पत्तिरिति। 'सतृणम् अत्ति' इत्यतः सकलमत्तीति बोधः। न तु तृणमपरित्यज्येति तृणभक्षणे तात्पर्याभावात्। 'साग्नि' अधीते इत्यतोऽग्निग्रन्थपर्यन्तमिति बोधः।।



Under the Auspices of The Ministry of Human Resource Development Government of India



राष्ट्रियसंस्कृतसंस्थानम्

**गङ्गानाथझापरिसरः**

चन्द्रशेखर-आजादोद्यानम्,

प्रयागः - 211002